५४

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला - १३
(अलङ्कारशास्त्रविभागे प्रथमं पुष्पम्)

श्रीकृष्णावधूतपण्डितप्रणीतः

# काव्यलक्षणसङ्ग्रहः

तथा तत्कृतं

# काव्यनवनीतम्

प्रधानसम्पादकः
डा. ए.वि. नागस[illegible]गे [illegible]
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

सम्पादकः
विद्वान् शङ्करनारायण अडिगः के. एम्.ए., एम्.फिल्
उपनिदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्
बेङ्गलूरु - २८

Pūrṇaprajña Samśodhana Mandira Granthamālā -13
(Alaṅkāra Section No. : 1)

# KĀVYALAKṢAṆA SAṄGRAHAḤ
AND
# KĀVYANAVANĪTAM

of

Śri Kṛṣṇāvadhūta Paṇḍita

*General Editor*

**Dr. A.V. Nagasampige M.A.,Ph.D.**

Director, Poornaprajna Samshodhana Mandiram, Bangalore-28

*Editor*

**Pt. K. Shankaranarayana Adiga M.A.,M.Phil.**

Deputy Director, Poornaprajna Samshodhana Mandiram, Bangalore-28

***Publisher :***

**Poornaprajna Samshodhana Mandiram**

**Poornaprajna Vidyapeetha,**

**Bangalore - 560 028**

Kāvyalakṣaṇa Saṅgrahaḥ and Kāvya Navanītam
of Śri Kṛṣṇāvadhūta Paṇḍita

*Published by* :.
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Bangalore - 560 028.

First Edition : 2002

Copies : 300

Price : Rs. 20/-

*Type setting :*
**Poornaprajna Samshodhana Mandiram**
**Poornaprajna Vidyapeetha,**
**Bangalore - 560 028**

*Printed by :*
**Lavanya Mudranalaya**
**Bangalore.**

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला - १३
(अलङ्कारशास्त्रविभागे प्रथमं पुष्पम्)

श्रीकृष्णावधूतपण्डितप्रणीतः

# काव्यलक्षणसङ्ग्रहः

तथा तत्कृतं

# काव्यनवनीतम्

प्रधानसम्पादकः
डा. ए. वि. नागसम्पिगे एम्.ए., पिहेच्.डि.
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

सम्पादकः
विद्वान् शङ्करनारायण अडिगः के. एम्.ए., एम्.फिल्
उपनिदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्
बेङ्गलूरु - २८

श्रीकृष्णावधूतपण्डितप्रणीतः काव्यलक्षणसङ्ग्रहः
तथा तत्कृतं काव्यनवनीतम्

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्
बेङ्गलूरु - २८

प्रथममुद्रणम् - २००२

मुद्रितपुस्तकसङ्ख्या - ३००

मूल्यम्- २०-०० रूप्यकाणि

पूर्णप्रज्ञसंशोधनमन्दिरविभागस्य
सङ्गणकयन्त्रे टङ्कितः ।

लावण्यमुद्रणालये मुद्रितः ।

# आशीर्वचनम्

श्रीमन्तः श्रीकृष्णावधूताः सकलशास्त्रविचक्षणाः विरेजुरिति विदितमेव काव्यशास्त्रविदां विदुषां समेषामपि। बाल्य एवास्माभिः तदीयमन्दारमरन्द-चम्पूग्रन्थः समवलोकितः । तत्रत्यरजतपीठपुरवैभवश्रीकृष्णमहिमादि-वर्णनमवलोक्य नितान्तं हृष्टाः स्मः। अलङ्कार-व्याकरण-न्याय-वेदान्तादि-शास्त्रेषु कृतपरिश्रमाणां विदुषां विद्याविद्योतनायानेके ग्रन्थाः तैर्विलिखिता आसन् । अद्य यावदनुपलब्धौ केवलं श्रुतिगोचरौ काव्यलक्षणसङ्ग्रहः काव्यनवनीतं चेति द्वौ तदीयग्रन्थाविदानीं पूर्णप्रज्ञसंशोधनमन्दिरात् प्रकाशिताविति महदिदं नः प्रमोदस्थानम् । काव्यस्वरूपादिविजिज्ञासूना-मिमौ ग्रन्थावुपकारकावित्यत्र न विप्रतिपत्तिलेशः । अस्मत्प्रियशिष्यः के. शङ्करनारायण अडिगः उपयुक्तटिप्पण्यादिसमायोजनेन ग्रन्थमिमं विदुषामवलोकनाय समर्पितवान् । अस्मदाराध्यश्रीरामविठ्ठलानुग्रहमस्मै अभिकामयामहे । काव्यशास्त्राध्येतारः सङ्ग्रहग्रन्थेनानेन मुदमाप्नुयुरिति विश्वसिमः ।

**श्री विश्वेशतीर्थश्रीपादाः**

श्रीपेजावराधोक्षजमठाधीशाः

उडुपि

# FOREWORD

The entire world of scholars is proud of this great genius Sri Krishnavadhuta. Through his works, his contribution to Dvaita, Advaita and Vishishtadvaita schools of thought is highly praiseworthy. His mastery over Kavya, Vyakarana and Alankara is well-known in the circle of learned Sanskrit scholars.

On Dvaita philosophy, and on poetics he has beautifully coined Sutras and has commented on them precisely. These are classics by themselves and are far-beyond the imagination of common people.

From his very works we find that he had unlimited brilliance and talent, by which he could compose well-over hundred stanzas in Sanskrit in a short span of one Ghatika (24 minutes).

Here, Poornaprajna Samshodhana Mandiram is extremely happy and proud to bring out in print two great and useful works of this seer-poet.

Kavya Lakshana Sangraha and Kavya Navanita were hitherto only the names of reference by scholars.

In Kavya Lakshana Sangraha, Kavya has been beautifully planned to divide this work in three layers- *Dhvani* (tone) *Guneebhuta* and *Chitra* (the word-visual).

Again this is divided into two- Drishya and Shravya (visual and listening). The poetry of narrative description is grouped into three parts - *Gadya* (prose), *Padya* (poetry) and *Champu* (happy blend of prose and poetry).

While Kadambari of legendary Bana Bhatta is a classic example of brilliant prose, Kiratarjuneeya and Raghuvamsha

stand out as examples of poetry and muse. Champu Ramayana and Champu Bharata score as great mile-stones in the perfect and harmonious blend of prose and poetry.

Poetry as a word-visual has drama as its main pillar with ten wide varieties as spectrum.

Thus this excellent work throws light on the main features of poetry.

In Kavya Navanita, poetry churned to get the cream of it, speaks about the rhetorics (अलङ्कारशास्त्र) dealing fairly with वस्तुलक्षण (cognition of objects) and on वस्तुप्रमाण (epistemology).

Sri Pejavara Swamiji, our President of Poornaprajna Samshodhana Mandiram has encouraged us to go in full swing with the research and publication of the finest works. But for his blessings encouragement, we would not have been what we are today. We are short of words to express our sincere gratitude to him.

Poornaprajna Samshodhana Mandiram is highly indebted to the authorities of Oriental Research Institute, Chennai who were kind enough to provide us with these rare and valuable manuscripts; we are thankful Pandit P.P. Sridhara Upadhyaya who co-operated with us to bring out the works in a short period.

Vidwan K. Shankaranarayana Adiga has edited these two works, giving very useful notes. It is my fond hope that this young and enthusiastic editor will come out with more works successfully.

**Dr. A.V. Nagasampige**
Director

# कृतज्ञतासमर्पणम्

प्रप्रथमं, यैरहं सुधान्तवेदान्तग्रन्थान् सस्नेहं पुत्रवदन्तरङ्गशिष्यत्वेन पाठितोऽस्मि, तादृशेभ्यः परमपूज्येभ्यः पूर्णप्रज्ञविद्यापीठप्रतिष्ठानाध्यक्षेभ्यः सर्वतन्त्रस्वतन्त्रेभ्यः पूर्णप्रज्ञसंशोधनमन्दिरप्रतिष्ठापने कृतपरिश्रमेभ्यो दिग्दिगन्तविश्रान्तयशोभ्यः सहस्रसहस्रशिष्योपशिष्योपगीयमानचरितेभ्यः शास्त्रकाननपञ्चाननेभ्यः पूर्णप्रज्ञविद्यापीठस्य कुलपतिभ्यः श्रीकृष्णपाद-कमलाराधकेभ्यः उडुपि **श्रीपेजावराधोक्षजमठाधीशेभ्यः श्रीविश्वेशतीर्थ-श्रीचरणेभ्यः** सभक्तिप्रणामान् अर्पयामि । येषां कृपालूनां परमानुग्रहेणाहं **'काव्यलक्षणसङ्ग्रहः' 'काव्यनवनीतम्'** इति- एतद्ग्रन्थद्वयसम्पादनं कृतवानस्मि ।

प्रो. के.टि. पाण्डुरङ्गिमहोदयामनितरसाधारणी विमर्शनपद्धति-रेतद्ग्रन्थद्वयसम्पादनप्रवृत्तस्य मम सहकारिभूताऽऽसीत् । कृष्णावधूत-पण्डितस्यैतद्ग्रन्थद्वयकर्तुः देशकालग्रन्थादिविषये तेषां मार्गदर्शनं वारंवार स्मरामि । सदयहृदयेभ्यः पूर्णप्रज्ञविद्यापीठस्योपकुलपतिस्थानमलङ्कृत-वद्भ्यस्तेभ्यः कृतज्ञताः सविनयमर्पयत्ययं जनः ।

यैः प्रकृतग्रन्थसम्पादनायाहं नियुक्तः तेषाम्, आदितः आकार्यपरि-समाप्ति समयोचितसूचनदानेन, एतद्ग्रन्थद्वयसम्पादनावश्यकामूल्य-हस्तलिखितपुस्तकप्रतिकृतिदानेन सकलविधसहकारसम्पत्तिप्रदानेन, मार्गदर्शनेन च प्रोत्साहितवतां पूर्णप्रज्ञसंशोधनमन्दिरस्य निदेशकानां डा.ए.वि.नागसम्पिगेमहाभागानां सन्निधौ कृतज्ञतासन्ततिर्वितीर्यते ।

तथा तत्र तत्र उद्भूतान् सन्देहसन्दोहान् परिहृतवद्भ्यः पूर्णप्रज्ञविद्यापीठ-

संस्कृतमहा पाठशालायामलङ्कारविभागाध्यक्षेभ्यः मान्येभ्यः श्री.ए. अनन्त तन्त्रिमहाभागेभ्यः, तथा उडुपि एस्.एम्.एस्.पि. संस्कृतमहापाठशालायामलङ्कारविभागाध्यक्षेभ्यः मान्येभ्यः डा. एच्.के. सुरेशाचार्येभ्यः कृतज्ञोऽहम्।

पूर्णप्रज्ञविद्यापीठे दशवर्षपर्यन्तं पाठितेभ्यः ज्येष्ठेभ्यः सुरभारतीसंरक्षणतत्परेभ्यः सर्वेभ्यः विपश्चिद्वरेभ्य उपाध्यायेभ्यश्च भूयसो धन्यवादान् अर्पयामि।

तथा अमूल्यसूचनदानेनोपकृतवद्भ्यः पूर्णप्रज्ञसंशोधनमन्दिरस्य उपनिदेशकेभ्यः श्रीरङ्गनाथकट्टिमहाभागेभ्यः धन्यवादाः निवेद्यन्ते। पूर्णप्रज्ञसंशोधनमन्दिरे गणकयन्त्रकार्यतत्परः श्रीविजयाचार्यमुकुन्दिः धन्यवादान् अर्हति।

इति भावत्कः
के.शंकरनारायण अडिगः

# प्रस्तावना

*अयि ! मान्या अनेकविद्याविलासोल्लासितमानसभूमयो विपश्चिदपश्चिमा महानुभावाः ।*

नाविदितचरमेतद् विश्वविदितवैदुष्यसम्पिपादयिषया त्यक्तालस्यानां साहित्यसुधापानसंसक्तान्तःकरणानां रसपानजनितसुखभाजां तत्रभवतां भवतां यत् संस्कृतसाहित्ये काव्यस्य सुभगत्वं रमणीयत्वं च । सांसारिकतापत्रयदग्धमानसाः काव्यरसासेकाद् जुष्टिं भजन्ते । नीरसशास्त्राभ्यासेन क्षुण्णान्तःकरणानामिदमेकं रसायनवद् आह्लादकरं भवति । सहृदयहृदयानन्दकारिणी काव्यवाहिनी कं पुमांसं न तर्पयति? तया यस्तोषं न प्राप्नोति, स पशुसमानः । तदुक्तम्- 'साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः ।' इति ।

**कविः**

काव्यनिर्माता कविरिति निगद्यते । यत्र दृष्टिसृष्ट्योरुभयोर्मेलनमस्ति । तदाह भट्टतौतः -

'नानृषिः कुरुते काव्यमृषिश्च किल दर्शनात् ।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ॥
स तत्त्वदर्शनादेव शास्त्रेषु प्रथितः कविः ।
दर्शनाद्वर्णनाच्चैव रूढा लोके कविश्रुतिः ॥' इति ।[1]

विविधवस्तुगतसूक्ष्मातिसूक्ष्मभावतत्त्वदर्शनेन कविः प्रजापतिवत् काव्यप्रपञ्चं निर्मिमीते । स्वस्मै यथा रोचते तथा स्वसृष्टिं परिवर्तयति । त एव वर्णाः । तान्येव पदानि । त एव अर्थाः । तथाऽपि स्वग्रथनकलाकौशलान्नव्यं काव्यं

1. काव्यकौतुकम्

सृजति कविः । कविनिर्मितौ कदाचन चेतनपदार्थां अचेतनवत्, अचेतनपदार्थाश्चेतनवद् भवन्ति । तदेतदाह आनन्दवर्धनः-

'अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते ॥
भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥' इति ।[2]

काव्यशास्त्रम्

सदा परिवर्तनशीले वैश्विे प्रपञ्चेऽस्मिन् व्यासभासवाल्मीकिकालिदासादिभिः परिचायितस्य काव्यमार्गस्य मालिन्यलेपनदूरीकरणाय नैके विद्वांसः काव्यनिबन्धनियमान् ग्रथयामासुः । तन्निर्माणमेव काव्यशास्त्रं, साहित्यशास्त्रम्, अलङ्कारशास्त्रमित्यादिशब्दैः लोके व्यवह्रियते । तथैव एतच्छास्त्रसम्बन्धि आभाणकं जगति जागर्ति -

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन च ॥' इति ।

शिष्यते प्रतिपाद्यते आचार्येण कर्त्रा वेदादिना करणेनेति वेदादि शास्त्रमित्युच्यते । कविकर्म काव्यम् । उभयोर्यद्यपि विभिन्नप्रस्थानात्मकता क्वचिदुच्यते -

'द्वे वर्त्मनी गिरो देव्याः शास्त्रं च कविकर्म च ।
प्रज्ञोपज्ञं तयोराद्यं [3]प्रतिभोद्भवमन्तिमम् ॥' इति ।

2. ध्वन्यालोकः -उद्योतः-३-कारिका-४३.
3. 'प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता । तदनुप्राणनाजीवद्वर्णनानिपुणः कविः॥ तस्य कर्म स्मृतं काव्यं......।' इति।
*माणिक्यचन्द्रस्य काव्यप्रकाशसङ्केतव्याख्यानम् -पृ.२२*

सकलवागभिमानिन्याः सरस्वत्याः शास्त्रं, काव्यमिति पद्धतिद्वयं प्रसिद्धम् । प्राथमिकं व्यतीतागामितात्कालिकनिखिलवस्तुविषयकज्ञानजन्यम् । द्वितीयं नवनवोन्मेषशालिप्रज्ञोपज्ञमिति । शास्त्रे विचारः अनुशीलनोहापरीक्षादिमार्गेषु प्रतिष्ठते । तत्र बुद्धिः सहकारिणी । चित्तवृत्त्युद्रेकादीनां नावकाशः । काव्ये तु व्यत्यस्यत्ययं पन्थाः । काव्योद्भवहेतुप्रतिभाऽपि प्रज्ञाविशेष एव । परन्तु सैषा प्रतिभा व्युत्पत्त्यभ्यासजन्या देवतामहापुरुषप्रासादाद्युत्पन्ना च क्वचित् मिलित्वा, क्वचित् प्राधान्येन काव्यनिर्माणे हेतुर्भवति ।

किञ्च काव्यशास्त्रयोरुद्देशोऽपि व्यतिरिच्यते । तत्त्वज्ञानजननं शास्त्रोद्देशः । तदर्थं प्रत्यक्षानुमानशब्दादिप्रमाणावलम्बनं प्रतिवस्तुनिरूपणे आवश्यकम् । काव्योद्देशस्तु रसानुभवः । स च भावैरभिव्यज्यते । एवं काव्यशास्त्रयोः पद्धतिः उद्देशश्च विभिन्न एव । तथाऽपि शास्त्रविषयस्य काव्येऽप्रवेशो नास्ति । काव्यप्रपञ्चप्रविष्टाः शास्त्रीया अपि विचाराः शुष्कतां परित्यज्य सहृदयहृदयाह्लादं जनयन्ति, चित्तं विकासयन्ति, मनोहारिणो भवन्ति । तदाह राजशेखरः -

'यांस्तर्ककर्कशानर्थान् सूक्तिष्वाद्रियते कविः ।
सूर्यांशव इवेन्दौ ते काञ्चिदञ्चन्ति कान्तताम् ॥'[4] इति ।

यथा काव्ये शास्त्रस्य प्रवेशः सम्भावितः तथैव शुष्कशास्त्रेऽपि क्वचिदुक्तिसौन्दर्यं नास्तीति को वा प्रेक्षावान् ब्रूते? उभयोरुभयत्र मेलनं यदा भवति तदा काव्यशास्त्रं, शास्त्रकाव्यमिति प्रभेदः उद्भवति ।

इदानीमालोचनलोकात् प्रस्तुतं प्रति प्रसरामः । काव्यस्यैव 'साहित्यम्'

---

4. काव्यमीमांसा - पृ.१००. अध्याय-१०.

इति वाचकः शब्दः प्रसिद्धः। सहितयोः शब्दार्थयोः भावः 'साहित्यम्'[5]। पाश्चात्यसाहित्ये पद्यात्मकभागस्यैव काव्यनाम (poem) प्रथितम्। परन्तु संस्कृतवाङ्मये[6] गद्यं पद्यं तदुभयात्मकचम्पूरपि काव्यमिति गीयते।

### काव्यलक्षणम्

सर्वत्र शास्त्रे उद्देशलक्षणविभागपरीक्षादिक्रमशः वस्तु निरूपणीयम्। लक्षणं च असाधारणो धर्मः। लोके तावद् दृग्गोचरपदार्थलक्षणनिरूपणावसरे एव लाक्षणिकाः स्खलिताः भवेयुः। किं पुनरनुभवैकवेद्यस्य काव्यस्य निर्दुष्टलक्षणकथनावसरे। लक्षणेन खलु अतिव्याप्त्यव्याप्त्यादिदोषरहितेन भाव्यम्। तेन च लक्ष्यं सजातीयविजातीयपदार्थेभ्यः व्यावर्तनीयम्। एवं सति निर्दुष्टकाव्यलक्षणनिरूपणं दुःसाहसमेव। निर्दुष्टलक्षणग्रथनस्य कष्टसाध्यत्वादेव प्राचीनालङ्कारिका अस्वीकृतकाव्यलक्षणकथनप्रयासाः काव्यलक्षणनिष्कर्षे नातिप्रायतन्त।

तत्र प्राचीनालङ्कारशास्त्रकारेषु प्रथमः प्रथिततमो भामहः 'शब्दार्थौ सहितौ काव्यम्'[7] इत्येवाकथयत्। तत्पश्चात्तनः दण्डी 'शरीरं तावदिष्टार्थ-व्यवच्छिन्ना पदावली' इति 'इष्टार्थबोधकपदसमूहः काव्यशरीरम्'[8] इत्युक्त्वा काव्यशरीरमसूचयत्।

---

5. 'शब्दार्थौ सहितौ काव्यम्' - काव्यालङ्कारः- १-१६ / शब्दार्थयोः नित्यसम्बन्धवत्त्वात् तत्सम्बन्धिनः काव्यस्य साहित्यमिति नाम।
'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' इति हि कालिदासः।
6. 'पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम्।' काव्यादर्शः - १-११.
7. काव्यालङ्कारः १-१६.
8. काव्यादर्शः - १-१०.

तत्पाश्चात्यः वामनः 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते'[9] इत्यभिधाय अन्यत्र 'रीतिरात्मा काव्यस्य' [10]इति काव्यस्याऽत्मानमसूसुचत्।

ध्वनिप्रस्थानप्रतिष्ठापनाचार्यः आनन्दवर्धनश्च प्रसङ्गात्

'सहृदयहृदयाह्लादादिशब्दार्थमयत्वमेव काव्यलक्षणम्'

इति परमतानुवादकाले काव्यलक्षणं यद्यपि न्यरूरुपत्। परन्तु 'काव्यस्याऽत्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः....तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥ '[11]इति स्वमुख्योद्देश्यध्वनिलक्षणप्रतिपादनतत्परो भूत्वा तल्लक्षणप्रपञ्चनार्थं नात्यर्थं प्रायतत।

प्रथमतः सदलकृत्यं सप्रयोजनं च काव्यलक्षणं कुन्तकः निबबन्ध। तथा च तल्लक्षणम् -

'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥'[12] इति।

मम्मटकृतलक्षणं तु- 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'[13] इति।

---

9. काव्यालङ्कारसूत्रवृत्तिः - १-१-१.
10. काव्यालङ्कारसूत्रवृत्तिः - १-२-६.
11. ध्वन्यालोकः - प्रथमोद्योतः - कारिका -१. 12. वक्रोक्तिजीवितम् - १-७.
13. काव्यप्रकाशः - प्रथमोल्लासः - सूत्रम् - ४. जातिव्यक्तिवत् शब्दार्थयोरन्योन्याविनाभावेन वृत्तेः। एकं विना अन्यस्य वृत्तिर्न सम्भवति। 'वाक्यं पठितम्, 'शब्दः श्रुतः', 'काव्यं गीतम्' इति शब्दमात्रस्य, 'अर्थः बुद्धः' इति अर्थमात्रस्य व्यवहारस्तु तत्तत्प्राधान्यविवक्षयैव।
'गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ' इति विद्यानाथः।
प्रतापरुद्रीयम् - काव्यप्रकरणे - १।

तत्र निष्कृष्टकाव्यलक्षणं विश्वनाथः साहित्यदर्पणे निबन्धयामास। तत्कृतलक्षणं तु -

'वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः ॥

उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥'[14] इति।

विश्वनाथकृता मम्मटकृतकाव्यलक्षणपरीक्षा -

प्रारम्भे एव कविसार्वभौमः विश्वनाथः मम्मटकृतकाव्यलक्षणं पदशः व्यमृशत्। काव्यलक्षणे 'अदोषत्वम्' अन्तर्भवति किम्? इति विश्वनाथः पृच्छति। दोषरहितशब्दार्थयोरेव काव्यत्वे काव्यशब्दार्थभूतवस्त्वेव जगति न स्यात्।[15] सर्वत्र यः कश्चन दोषः स्यादेव। किञ्चिद्दोषवतोऽपि व्यङ्ग्यार्थभूयिष्ठस्य सहृदयहृदयाह्लादकस्य[16] उत्तमकाव्यत्वं प्रेक्षावन्तः किं नाङ्गीकृतवन्तः? किञ्च दोषत्वेन परिगणिताः दुःश्रवत्वादयो यदि रसानपकर्षकाः तर्हि न ते दोषाः भवन्ति। कर्कशवर्णसंयोजनं शृङ्गाररसभूयिष्ठे काव्ये दोषः, न पुना रौद्ररसव्यञ्जके। अत एव तेषामनित्यदोषत्वम्। तथाचोक्तम् आनन्दवर्धनेन -

---

14. साहित्यदर्पणः - परिच्छेदः - १-कारिका - ३

15. साहित्यदर्पणः - १-२-पृ.१४

16. 'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥'

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्। प्रत्युत ध्वनित्वेनोत्तमकाव्यताऽस्याङ्गीकृता। तस्माद्व्याप्तिर्लक्षणदोषः।

'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥'[17] इति ।

अथैवं शङ्केत - 'अदोषौ' इत्यत्र 'अनुदरा कन्या' इत्यत्रेव अल्पार्थे नञ्प्रयोगः । तथाचात्र कारिका -

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥'[18] इति ।

एवं सति प्रविरललभ्यस्य निर्दुष्टकाव्यस्य काव्यत्वं न स्यात् । तत्परिहाराय दोषसम्भवे सति बलवद्दोषरहितौ शब्दार्थौ काव्यमिति लक्षणपरिष्कारः करणीयः । तदा नायं वक्तव्यांशः सम्भवति काव्यलक्षणे । लक्षणकथनावसरे तद्दोषवचनमप्रसक्तमापतति खलु । नहि रत्नेषु विद्यमानाः कीटानुवेध-मालिन्यादयः रत्नत्वं व्याहन्येयुः । किं पुनः? तत्र तारतम्यमात्रापादकाः भवेयुः । तद्वद् अल्पदोषाः काव्यत्वविध्वंसका न भवन्ति ।

तदुक्तं प्राचीनैरालङ्कारिकैः -

'कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुभवः स्फुटः ॥'[19] इति ।

---

17. ध्वन्यालोकः - द्वितीयोद्योतः - कारिका - ११.पृ.१००.

18. साहित्यदर्पणप्रभाव्याख्योदाहृतहरिकारिका - १-२ ।
*साहित्यदर्पणः - परिच्छेदः - १-२. पृ.११-१२.*

19. साहित्यदर्पणोदाहृतप्राचीनकारिका - १-२. 'इयं कारिका भट्टनायकस्य हृदयदर्पणस्था' इति प्रभाकरभट्टकृतरसप्रदीपे उक्तमिति, मान्याः तीं.नं. श्रीकण्ठय्य-महाभागाः 'भारतीयकाव्यमीमांसे' इति स्वकृतौ वदन्ति ।

**'सगुणौ' इति विशेषणविमर्शः -**

ध्वनिसिद्धान्ते माधुर्यं , ओजः, प्रसाद इति त्रय एव रसधर्माः । तदुक्तं मम्मटेन -

'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।
आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।।
दीप्त्यात्मविस्तृतेर्हेतुः ओजो वीररसस्थितिः ।
शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।।'[20] इति ।

एते त्रयः, आत्मनः शौर्यवीर्यौदार्यादिधर्मा इव काव्यात्मनो रसस्यैव गुणा इति सर्वे नव्यलाक्षणिका अभिप्रयन्ति । एवमपि मम्मटः स्वीये काव्यलक्षणे रसनाम अनुच्चरन् धर्मिणं रसं अनिर्दिशन् तन्निष्ठगुणान् केवलं स्मरतीत्येतद् आश्चर्यस्थानम् । गुणिनमनुल्लिख्य गुणनिर्देशमात्रेण तस्येह ऊहा कार्या इत्यभिप्रायोऽप्यसाधुः । तदा **'सरसौ'** इति गुणिनः रसस्यैव वचनं युक्तम् । न तु सगुणाविति । न हि लोके जनाः 'प्राणिमन्तो देशाः' इति व्यवहारस्थाने **'शौर्यादिमन्तो देशाः'** इति शब्दं प्रयुञ्जते ।

अपि च गुणाः माधुर्यादयः न काव्यस्वरूपान्तर्गताः । किन्तु तदुत्कर्षाधायकाः । अलङ्काररीतयोऽपि तथा[21] । काव्यस्य शब्दार्थौ शरीरम् । रसादिरात्मा[22] । गुणाः शौर्यादिवत् । अपकर्षहेतवो दोषा अन्धत्वादिवत्,

---

20. काव्यप्रकाशः - उल्लास -८-कारिका-६८-६९-७०-७१,
21. 'काव्यस्य शब्दार्थौ शरीरम् । कविसमयो जातिः । व्यङ्ग्यं जीवितम् । नायक आश्रयः । गुणदोषवृत्तिरीतिप्रवृत्तिपाकशम्यालङ्कारा लोकवत् ।'

*काव्यनवनीतम् - तृतीयगोलकम्*

वैदर्भ्यादिरीतयः करचरणादिसन्निवेशवत्। अनुप्रासोपमालङ्कारादयः कटककुण्डलादिवत् काव्यशोभावहा एव [23]। तस्मात् **'वाक्यं रसात्मकं काव्यम्'** इति विश्वनाथेन लक्षणमभिहितम्।

रसगङ्गाधरे जगन्नाथः **'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'**[24] इति काव्यलक्षणं जगाद। अर्थे रमणीयत्वं नाम लोकोत्तराह्लादजनकत्वम्। **'चैत्र पुत्रस्ते जातः'** इत्यादिवाक्यजन्यस्य सुखस्य लोकोत्तरत्वाभावान्न तस्य काव्यत्वम्। आनन्दे लोकोत्तरत्वं तु अनुभवैकसाक्षिकत्वम्। लोकोत्तरस्यैवाऽनन्दस्य चमत्कार इति नामान्तरम्। **'रमणीयार्थवाचकः शब्दः'** इत्यनुक्त्वा **'प्रतिपादकः'** इति कथनं तु वाच्यार्थव्यङ्ग्यार्थोभय-सङ्ग्रहायैव।

प्राचीना आलङ्कारिकाः सर्वेऽपि शब्दार्थयोः सहितयोः काव्यत्वं प्रत्यपी-पदन्। जगन्नाथस्तु नान्वमंस्त तेषामभिप्रायम्। शब्दार्थयोर्द्वयोः काव्यत्वे प्रमाणविरोधमुपपादयति सः। **'उच्चैः काव्यं पठ्यते'**, **'काव्यं श्रुतम्, अर्थो नावगतः'** इत्यादयो लौकिकाः व्यवहाराः शब्दमात्रस्य काव्यसञ्ज्ञां दृढयन्ति, अर्थस्य तु निराकुर्वन्ति, इत्येव समेषामनुभवः। तस्मात् शब्दस्यैव

---

22. आदिपदेन

**'रसभावरसाभासभावाभासाश्च ये मताः।**
**भावानां शान्तिरुदयः सन्धिः शबलता तथा॥'**

*काव्यलक्षणसङ्ग्रहः - कारिका-१७*

इत्युक्ताः ग्राह्याः।

23. तदुक्तं दण्डिना - **'काव्यशोभकरान् धर्मान् अलङ्कारान् प्रचक्षते'** इति।

*काव्यादर्शः - २-१*

24. रसगङ्गाधरः - *प्रथममाननम् - १*

काव्यत्वमङ्गीकृत्य तन्निष्ठतया लक्षणं परिष्करणीयमिति जगन्नाथो नूतनवादसरणिमाविश्चकार ।

**काव्यलक्षणसङ्ग्रहकर्तुः कृष्णावधूतपण्डितस्य मतानुसारेण काव्यलक्षणम्-**

**'सालङ्कारगुणौ काव्यं शव्दार्थौ दोषवर्जितौ ।**
**तथा कवीनां समयानुरोधेन निवन्धितम् ॥'**[25] इति ।

अत्र वृत्तिः - **'शब्दार्थयोरविनाभावाद् द्विवचनम्'** इति ।

यद्यपि विश्वनाथेन काव्यलक्षणे **'अदोषौ'** इति विशेषणनिवेशे दोषः प्रदर्शितः । तथाप्यत्र स्फुटदोषवर्जिताविति **'दोषवर्जितौ'** इति विशेषणस्य तात्पर्यकथने न साहित्यदर्पणे उद्भावितानां दोषाणां प्रसक्तिः । दोषे स्फुटत्वं नाम रसास्वादनप्रतिबन्धकत्वमेव । अत्र कृष्णावधूतः शब्दार्थयोरविनाभावाद् उभयोः काव्यत्वमाह । तदभिप्रायस्तु सहृदयस्य रसास्वादने उभयोः समप्राधान्यमिति । उभयत्र रमणीयतायामीषन्मात्रन्यूनता सोढुमसह्यैवेति भावेन द्विवचन-मुपात्तम् । कुन्तकोऽपि एवमभिप्रैति- साम्येन सकलगुणवन्तौ सुहृदाविवा-न्योन्यसङ्गतौ शब्दार्थौ यदि परस्परस्य शोभावहौ भवतः तदैव काव्यनाम भजतः । रसपरिपोषणं कुरुतः'[26] इति । **'सालङ्कारगुणौ'** इत्यनेन रचनायां गुणवैशिष्ट्यालङ्कारविन्यासयोरावश्यकतां कृष्णावधूतपण्डितो मनुते ।

---

25. काव्यलक्षणसङ्ग्रहः - कारिका - २.
'कविसमयानुवद्धौ शव्दार्थौ काव्यम्' *काव्यनवनीतम्-प्रथमगोलकम् ।*

26. 'समसर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा ॥'
*वक्रोक्तिजीवितम् - १८. प्रथमोन्मेषः ।*

**'काव्यलक्षणसङ्ग्रहः' इति प्रकृतग्रन्थः -**

नाम्नैव ज्ञायतेऽस्मिन् ग्रन्थे प्रबन्धा कृष्णावधूतः काव्यस्य लक्षणविभागादिविचारान् सञ्जग्राहेति । ध्वन्यालोककाव्यप्रकाशसाहित्यदर्पणादयोऽलङ्कारशास्त्रकृतयो यथा कारिकावृत्त्युदाहृतिभिः त्रिधा विभक्ताः, तथाऽयं ग्रन्थोऽपि कारिकावृत्त्युदाहृतिभिः त्रिधा विभक्तः । प्रायः सर्वाः कारिका वृत्तय उदाहृतयश्च सरलाः सत्यः सचेतसां चेतश्चमत्कुर्वन्ति ।

**अलङ्कारशास्त्रेषु काव्यलक्षणसङ्ग्रहाख्यकृतेः वैशिष्टचम् -**

सर्वेषु अलङ्कारशास्त्रनिबन्धेषु ध्वन्यालोककाव्यप्रकाशसाहित्यदर्पणरसगङ्गाधराः एव नायकाः । तत्रापि उत्कर्षापकर्षपरीक्षायां ध्वन्यालोके आमूलाग्रं ध्वनिरेव निरूपितः । ततोऽर्वाचीनः काव्यप्रकाशोऽतीवगहनो बुद्धिमतामपि दुर्बोधतां प्राप्तः । ततोऽप्यर्वाक्तनो रसगङ्गाधरस्तार्किकपद्धतिमनुसरन् अतिसूक्ष्मेक्षिकयैवावगन्तुं शक्यः, सर्वथा दुरधिगमः । परन्तु योऽयं श्रीमतां पुरत उपस्थाप्यमानः काव्यलक्षणसङ्ग्रहोऽतीवसुगमः कोमलमतीनामपि अल्पप्रयत्नेनैवाव बोद्धुं शक्यः । ध्वन्यालोकादिषु ग्रन्थेषु ये ये विषयाः प्रतिपादिताः तत्तत्प्रतिपादकेऽस्मिन् काव्यलक्षणसङ्ग्रहे क्वचिद् विषयेष्वाधिक्यं सर्वत्र सरलता तेषां सङ्ग्रहश्च नूतनतया दृश्यते । तत्प्रकारं किञ्चिदिवात्र पश्यामः ।

**ध्वनिप्रभेदनिरूपणे विशेषः -**

काव्यलक्षणसङ्ग्रहे कृष्णावधूत आदौ काव्यलक्षणं निरूप्य काव्यं ध्वनिः[27]

---

27. 'ध्वन्यन्ते प्राधान्येन व्यज्यन्ते व्यङ्ग्यार्था येनेति ध्वनिः'

*काव्यलक्षणसङ्ग्रहवृत्तिः कारिका - ३.*

'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥'

*ध्वन्यालोकः १ - १३.*

गुणीभूतव्यङ्ग्यं चित्रमिति त्रेधा विभजते । तत्र ध्वनिरुत्तमकाव्यम् । व्यङ्ग्यस्याप्राधान्ये गुणीभूतव्यङ्ग्यमिति प्रभेद उद्भवति । ध्वनेः प्रभेदा अनेकेषु ग्रन्थेषु नैकधा सङ्गृहीताः। ध्वन्यालोके विविधा ध्वनिप्रभेदाः निरूपिताः। ध्वनेर्वस्तुरसालङ्कारादिनानाप्रभेदानामन्योन्यसम्बन्धभावाभावाभ्यामनन्ता विभागा भवन्ति । एतदेवाऽह आनन्दवर्धनः -

'तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥'[28] इति ।

ध्वन्यालोकलोचनकारोऽभिनवगुप्तो ध्वन्यालोकद्वितीयोद्योतगतायाः एकत्रिंशत्तमकारिकायाः, तृतीयोद्योतस्य त्रिचत्वारिंशत्तमकारिकायाश्च व्याख्यानावसरे ध्वनिप्रभेदान् गणयामास । प्रथमतः 'एवं ध्वनेः प्रभेदान् प्रतिपाद्य'[29] इति वृत्तिव्याख्यावसरे ध्वनेः शुद्धान् पञ्चत्रिंशत् (३५) प्रभेदान् प्रतिपादयामास । तथा च ध्वन्यालोकलोचनवाक्यानि-

'अविवक्षितवाच्यो विवक्षितान्यपरवाच्य इति द्वौ मूलभेदौ । आद्यस्य द्वौ भेदौ - अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्यश्च । द्वितीयस्य द्वौ भेदौ- अलक्ष्यक्रमोऽनुरणनरूपश्च । प्रथमोऽनन्तभेदः । द्वितीयो द्विविधः- शब्दशक्तिमूलोऽर्थशक्तिमूलश्च । पश्चिमः त्रिविधः - कविप्रौढोक्तिकृतशरीरः कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरः, स्वतःसम्भवी च । ते च प्रत्येकं व्यङ्ग्यव्यञ्जकयोरुक्तभेदनयेन चतुर्धेति द्वादशविधोऽर्थशक्तिमूलः । आद्याश्चत्वारो भेदा इति षोडश मुख्यभेदाः । ते च पदवाक्यप्रकाश्यत्वेन प्रत्येकं द्विविधा वक्ष्यन्ते । अलक्ष्यक्रमस्य तु वर्णपदवाक्यसङ्घटनाप्रबन्धप्रकाश्यत्वेन पञ्चत्रिंशद्भेदाः ॥'[30]

28. ध्वन्यालोकः - उद्योतः - २. कारिका - १२.
29. ध्वन्यालोकवृत्तिः - उद्योतः - २. कारिका - ३१.
30. ध्वन्यालोकलोचनम् - उद्योतः - २. कारिका - ३२.

काव्यप्रकाशकर्ता मम्मटस्तु ध्वनेः एकपञ्चाशच्छुद्धभेदानाह -

'वाक्ये द्व्युत्थः पदेऽप्यन्ये, प्रबन्धेऽप्यर्थशक्तिभूः ।

पदैकदेशरचनावर्णेष्वपि रसादयः ।

भेदास्तदेकपञ्चाशत् .........।।'[31]

विश्वनाथोऽपि साहित्यदर्पणे ५१ प्रभेदान् रीत्यन्तरेण प्रकाशयामास ।

काव्यलक्षणसङ्ग्रहानुसारेण ध्वनिभेदाः

काव्यलक्षणसङ्ग्रहकर्ता कृष्णावधूतः शुद्धध्वनेः ९३ प्रभेदान् आह -

[32]'एवं च ध्वनयः शुद्धाः त्र्युत्तरा नवतिर्मताः ।' (९३)

तेषां गणनाक्रमश्चेत्थम् -

लक्षणामूलकोऽविवक्षितवाच्यः, अभिधामूलको विवक्षितान्यपरवाच्यश्चेति द्वौ मूलभेदौ । तत्र अविवक्षितवाच्यध्वनेः चत्वारः (४) प्रभेदाः ।[33]

विवक्षितान्यपरवाच्यप्रभेदभूतस्य शब्दशक्तिमूलकस्य संलक्ष्यक्रमव्यङ्ग्यस्य चत्वारः (४) प्रभेदाः ।[34]

अर्थशक्तिमूलकस्य ३६ प्रभेदाः ।[35]

---

31. काव्यप्रकाशः - उल्लासः -४. कारिका -४२-४३ ।

32. काव्यलक्षणसङ्ग्रहः - कारिका - १९.

33. 'अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्ततिरस्कृते ।
इति द्वेधा पुनर्द्वेधा पदवाक्यगतत्वतः ।।' *काव्यलक्षणसङ्ग्रहः- कारिका-६*

34. 'अलङ्कृतेर्वस्तुनो वा प्राधान्याच्छब्दशक्तितः ।
यत्र व्यक्तिर्भवेत् सोऽयं शब्दशक्त्युद्भवो द्विधा ।
पदवाक्यगतत्वेन द्विविधोऽपि पुनर्द्विधा ।।' *काव्यलक्षणसङ्ग्रहः-कारिका-११-१२*

35. 'इत्यर्थशक्तिमूलोऽयं षट्त्रिंशद्विध उच्यते'
*काव्यलक्षणसङ्ग्रहः - कारिका -१६*

शब्दार्थोभयशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्यप्रभेद एकः ।

असंलक्ष्यक्रमव्यङ्ग्यरसादिध्वनेरष्टचत्वारिंशत् (४८) प्रभेदाः ।[36]

आहत्य ९३ शुद्धध्वनिप्रभेदाः भवन्ति ।

**तत्र संसृष्ट्या, सङ्करेण ध्वनिवैविध्यम्**

पूर्वोक्तरीत्या विविधालङ्कारशास्त्रेषु ध्वनेः शुद्धभेदानां गणनावसरे यथा व्यत्यासो वरीवर्ति तथैव ध्वनेः संसृष्टिभेदानां सङ्करभेदानां च विस्तारकाले महत्त्वपूर्णविभिन्नाभिप्रायाः दृश्यन्ते । ध्वन्यालोकलोचनकारः गुणीभूत-व्यङ्ग्यादीनां स्वीयप्रभेदैः सह संसष्टिभेदेन सङ्करभेदेन च आहत्य ७४२० ध्वनिप्रभेदान् प्रदर्शितवान् । काव्यप्रकाशकारः मम्मटः संसृष्टिसङ्करयोः १०४०४ प्रभेदान् ५१ शुद्धध्वनिभेदैः सम्मेल्य आहत्य १०४५५ प्रभेदान् प्रादर्शयत् । तथा साहित्यदर्पणकारः विश्वनाथः ५३५५ प्रभेदान् ।

तथा च ध्वन्यालोकलोचनम् - 'पूर्वं ये पञ्चत्रिंशद्भेदा उक्तास्ते गुणीभूत-व्यङ्ग्यस्यापि मन्तव्याः । स्वप्रभेदास्तावन्तोऽऽलङ्कार इत्येकसप्ततिः । तत्र सङ्करत्रयेण संसृष्ट्या च गुणने द्वे शते चतुरशीत्यधिके (२८४) । तावता पञ्चत्रिंशतो मुख्यभेदानां गुणने सप्तसहस्राणि चत्वारि शतानि विंशत्यधिकानि (७४२०) भवन्ति ।'[37] इति ।

---

36. 'असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरष्टधा।
रसभावरसाभासभावाभासाश्च ये मताः ।
भावानां शान्तिरुदयः सन्धिः शबलता तथा ।
एतेऽष्टौ षड्विधा वाक्ये पदे तस्यैकदेशके ।
वर्णेषु रचनायां च प्रबन्धेषु स्थिरत्वतः ॥'

*काव्यलक्षणसङ्ग्रहः - कारिका - १६-१८.*

37. लोचनम् - उद्योतः - ३. कारिका - ४३

अत्र काव्यप्रकाशः[38] -

'भेदास्तदेकपञ्चाशत् तेषां चान्योन्ययोजने ।

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।'

वेदखाब्धिवियच्चन्द्राः (१०४०४) शरेषुयुगखेन्दवः । (१०४५५) इति । (वेदाः=४, खं= ०, अब्धिः= ४, वियत्= ०, चन्द्रः= १ - अङ्कानां वामतो गतिः । अर्थात् - १०४०४ सम्पद्यते । तथैवोत्तरत्रापि ।)

अस्मिन् विषये साहित्यदर्पणोल्लेखः एवमस्ति-

'तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ।

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

वेदखाग्निशराः (५३०४) शुद्धैरिषुबाणाग्निसायकाः ।' (५३५५)[39] इति ।

काव्यलक्षणसङ्ग्रहे कृष्णावधूतः अत्यधिकान् एकविंशतिसहस्राणि पञ्चशतानि चत्वारिंशदधिकानि (२१५४०) ध्वनिप्रभेदान् ब्रूते । तथा च कारिका -

'एवं ध्वनयश्शुद्धाः त्र्युत्तरा नवतिर्मताः । (९३)

एतेषां मिश्रणे भेदाश्चन्द्रवाज्यग्निसागराः ॥ (४३७१)

चतुर्विधैः सङ्करैश्च संसृष्ट्य चैकरूपया ।

पञ्चधा योजने भेदाः खाब्धिबाणेन्दुबाहवः ॥' (२१५४०) इति ।

**काव्यलक्षणसङ्ग्रहे काव्यविभागः**

आदौ ध्वनिः, गुणीभूतव्यङ्ग्यं, चित्रमिति कृष्णावधूतेन त्रिधा काव्यं

---

38. काव्यप्रकाशः - चतुर्थोल्लासः - सूत्र - ६२-६५.

39. साहित्यदर्पणः - परिच्छेदः - ४. कारिका - ११-१२.

व्यभाजि । पुनः, काव्यं श्राव्यं दृश्यमिति द्वेधा विभक्तम् । तत्र श्राव्यं गद्यपद्यमिश्रभेदेन त्रिविधम् । गद्यकाव्यं कादम्बर्यादि, पद्यकाव्यं रघुवंशादि, मिश्रं चम्पूरामायणादि । दृश्यं तु नाटकादिभेदेन दशविधम् । पुनः महाकाव्योपकाव्यभेदेन श्राव्यकाव्यं द्विविधम् । एवं काव्यं विभज्य ग्रन्थकारः काव्यलक्षणाख्यस्वीयकृतिं समापितवान् ।

**अस्यैव प्रवन्धुः काव्यनवनीताख्या अपरा कृतिः**

पण्डितशिरोमणेः नाटचशास्त्राद्यभिज्ञस्य कृष्णावधूतस्य यथाऽलङ्कार-शास्त्रेऽगाधमप्रतिमं नैपुण्यं वरीवर्ति, तथा न्यायशास्त्रेऽपीत्येतदस्यैव कृतिनः प्रस्तुतकृतिना **'काव्यनवनीतेन'** अवगम्यते । अत्राऽद्यानि त्रीणि पत्राणि अनुपलब्धानि । ग्रन्थसम्पादने प्रवृत्तेन न तावता ततः प्रच्युतधैर्येण निवर्तनीय-मिति धिया यावदुपलब्धं तावदेव सम्पादितम् । पदार्थनिरूपणपरे प्रथमगोलके द्रव्यगुणनिरूपणान्तो भागोऽनुपलब्धः । उत्तरत्रोपलप्स्यते चेत् पुनर्मुद्रणे तस्य उपयोगोऽवश्यम्भावी ।

काव्यनवनीतमिदं पञ्चसु गोलकाख्यविभागेषु न्यायशास्त्रालङ्कार-शास्त्रसम्बन्धिनानाविषयान् सङ्ग्रहरूपेण प्रतिपादयति । तत्र पदार्थनिरूप-णात्मकप्रथमगोलके पदार्थान् द्रव्यगुणकर्मसामान्याभावभेदेन पञ्चधा विभजते ग्रन्थकारः । तार्किकाभिमतविशेषसमवायावस्य नाभिमतौ ।

प्रमानिरूपणात्मकद्वितीयगोलके प्रमाप्रमाणादीनां विशेषप्रकारेण प्रति-पादनमस्ति । तत्र प्रमाणनिरूपणे स्वीयपद्धतिमेव कृष्णावधूतोऽनुसरति । **'व्याप्यारोपेण व्यापकारोपस्तर्कः'** इति वदन्तस्तार्किका तर्कमयथार्थानु-भवेऽन्तर्भावयन्ति । परन्तु अनुमाने प्रतिवादिना उत्पाद्यमानाप्रयोजकत्व-शङ्कानिराकरणे तमेव तर्कं साधनतयोररीकुर्वन्ति ते । तामेतां विरुद्धप्रक्रियामव-लोक्य कृष्णावधूतस्तर्कं पृथक्प्रमाणं मनुते । तन्मते प्रमाणानि द्वादश ।

'प्रत्यक्षानुमानोपमानशब्दाचारात्मतुष्टचर्थापत्त्यनुपलब्धिसम्भवैतिह्युपरिशेषतर्काः'[40] इति।

तत्र प्रत्यक्षानुमानोपमानशब्दाः सव्यापारप्रमाणानि। शिष्टानि शिष्टाचाराद्यष्टौ निर्व्यापाराणि। अत एव न तेषां चतुर्षु अन्तर्भावः। उक्तप्रमाणानुसारेण तज्ज्ञो यथार्थानुभवोऽपि द्वादशविधः। समवायानङ्गीकारात् प्रत्यक्षनिरूपणावसरे समवायस्थाने उपरञ्जनाख्यसम्बन्धमादाय प्रत्यक्षजनकसन्निकर्ष उपपाद्यते।[41]

काव्यनवनीतस्य तृतीये गोलके काव्यप्रक्रिया निरूप्यते। काव्यलक्षणं, काव्यशरीरादिनिर्देशः, कविसमयनिरूपणं, व्यङ्ग्यवैविध्यमित्यादयो विषया अत्र प्रदर्शिताः।

चतुर्थे गोलके शब्द-वाक्य-अर्थ-रसदोषाः क्रोडीकृताः। अत्राष्टादश पददोषाः, त्रयस्त्रिंशत् वाक्यदोषाः, अष्टाविशंतिरर्थदोषाः पञ्चदश रसदोषा ग्रन्थकृता प्रादर्शिषत।

पञ्चमे गोलके काव्यविभागं सङ्क्षेपेण प्रदर्शयित्वाऽन्ते काव्यप्रयोजनानि श्लोकेनैकेन समगृह्णात्।

**तत्र काव्यप्रयोजनानि**

कविः काव्यनिर्माणे, अध्येता काव्याध्ययने च किञ्चित्प्रयोजनमुद्दिश्यैव प्रवर्तते। तथा चात्राभियुक्तोक्तिर्जागर्ति-

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।' इति।

---

40. काव्यनवनीतम् - द्वितीयगोलकम्.

41. 'द्रव्यप्रत्यक्षे संयोगः सन्निकर्षः। द्रव्यगतगुणप्रत्यक्षे संयुक्तोपरञ्जनम्' काव्यनवनीतम् - द्वितीयगोलकम्।

किमुत धीमन्तः प्रेक्षावन्तः । तथा च काव्येऽपि कैश्चित् प्रयोजनैर्भाव्यम्। आलङ्कारिकास्तानि प्रयोजनानि स्वशास्त्रे प्रादर्शयन् । तत्र मम्मटः काव्यप्रयोजनविषये स्वाभिप्रायमेवं प्राचीकटत् -

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।'[42] इति ।

लोकोत्तरवर्णनानिपुणकविकर्मणः काव्यस्य यशः, धनप्राप्तिः, व्यवहार-ज्ञानं, अमङ्गलनिवारणं, तात्कालिकपरानन्दप्राप्तिः, कान्तासदृशोप-युक्तोपदेशश्चेति षट् प्रयोजनान्यत्र मम्मटः सञ्जग्राह । एतेषु यशआदिकं अध्येतुः प्रबन्धुर्वाऽऽनुषङ्गिकं फलम् । मुख्यतो मोक्षानुभवसदृक्षरसानुभव-जन्यपरानन्दप्राप्तिरेव श्रेष्ठं फलमित्यत्र न विवदन्ते दार्शनिकाः । उदाहृतेषु षट्सु प्रयोजनेषु- सैषा परानन्दावाप्तिः कविसहृदययोरुभयोरपि समाना, कीर्तिस्तु कवेरेव, उपदेशोऽध्येतुर्भवति । धनप्राप्तिर्भवत्येवेति न नियमः । व्यवहारज्ञानं शास्त्रादिना अमङ्गलनिवारणं [43]मन्त्रोच्चारणयागादिनाऽपि साध्यमिति न तत्र काव्यापेक्षा । तस्मात्तदेतद्द्वयं विहायैव कृष्णावधूतपण्डितः काव्यनवनीते काव्यफलनिरूपणात्मके पञ्चमे गोलके काव्यप्रयोजनान्येवं समगृह्णात् -

'काव्यं शुभयशोऽर्थेभ्यः कान्तावदुपदेशकृत् ।
कर्तृनेतृप्रतिष्ठायै परानन्दाय मुक्तये ।।' इति ।

अत्र सुकीर्तिः धनं, कान्तासदृशोपदेशः, कविनायकयोः स्थानप्राप्तिः,

---

42. काव्यप्रकाशः , उल्लासः - १. कारिका - २.

43. 'आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः ।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ।।'
इति दशरूपके व्यवहारज्ञानस्य काव्यफलत्वे निन्दोक्तिरुक्ता ।
(प्रकाशः - १. कारिका - ६.)

परमानन्दाप्तिः, दुःखनिवृत्तिरूपमुक्तिश्च काव्यप्रयोजनतया निर्दिष्टानि सन्ति ।

**यशःप्राप्तिः, स्थानप्राप्तिश्च**

स्वकृतिना कीर्तिः सम्पादनीयेति कवेरभिलाषः स्वाभाविक एव । कालिदासोऽपि कवियशःप्राप्त्यर्थं[44] काव्यनिर्माणे प्रवृत्तोऽस्मीति वदति । परन्तु सर्वेषां कवीनां स्वप्रबन्धतो यशोलाभो नाभूदितीतिहासतो वयं जानीमः। केषाञ्चिदेव कवीनां स्वजीवितानन्तरं तत्प्राप्तिः दरीदृश्यते । तदेतदाह राजशेखरः -

'गीतसूक्तिरतिक्रान्ते स्तोता देशान्तरस्थिते ।
प्रत्यक्षकविकाव्ये तु सावज्ञः सुमहत्यपि ॥'[45] इति ।

परन्तु बाणादयः केचन सुकृतिनः स्वजीवितकाल एव काव्यनिर्माणेन महत्तरं यशोऽर्थादिकं प्राप्नुवन्निति तेषां जीवनचरित्रेण[46] ज्ञायते । स्वप्रख्यापककाव्यनिर्माणेन राजानोऽपि ख्यातिमलभन्त । बाणकृतहर्षचरितेन बाणश्रीहर्षयोरितिहासेऽनितरसाधारणं स्थानं लब्धमिति नातिरोहितो विषयः ।

'ख्याता नराधिपतयः कविसंश्रयेण राजाश्रयेण च गताः कवयः प्रसिद्धिम् ।'[47]

---

44. मन्दः कवियशःप्रार्थी' - रघुवंशम् । सर्गः - १. श्लोक - ३.

45. काव्यमीमांसा - पृ.१३३. अ-१०

46. 'हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि गुणिने बाणाय....।'

*इति सुभाषितावलौ - श्लोकसङ्ख्या - १८०.*

47. सुभाषितरत्नभाण्डागारम् - पृ.३३. श्लोक-३८.

एवं परस्पराश्रयेण परस्परयोरुपकारो भवति स्म। अतः काव्यप्रयोजनेषु यशोऽर्थौ स्थानप्राप्तिश्च फलतया निर्दिष्टाः।

**नीतिबोधः**

नीतिबोधनमपि काव्यप्रयोजनम्। श्रुतिस्मृती प्रभोराज्ञावत्, इतिहास-पुराणानि हितैषिमित्रवत्, काव्यं भार्यावत् नीतीरुपदिशन्ति। प्रथमद्वितीयोप-देशपद्धतौ श्रवणकाले उपदेशतया विषयाः प्रतिपाद्यन्ते। काव्ये तु उपदेश-त्वेनागृहीता एव विषया रसानुभवकाले हृदयं प्रविश्य चित्तमार्द्रीकुर्वन्ति। भार्यावत् काव्यमन्तरेवाध्येतारं सन्मार्गे गमयति।

**ग्रन्थकर्ता कृष्णावधूतः**

'अवधूत' इति नाम्नैव ज्ञायते यदयं भूशिरोमणिः ग्रन्थकृत् संसारासारतां ज्ञात्वा सकललौकिकसुखसाधनेषु भोगभाग्येषु विरक्तिं लब्ध्वा भगवत्सेवातुर आसीदिति। पण्डितवर्योऽयं श्रीराघवेन्द्रतीर्थानां भक्ताग्रेसरः तत्कृपाकटाक्ष-पात्रीभूतश्चाऽसीत्। क्वचित् कृष्णावधूतः स्वात्मानं 'गुरुराघवेन्द्र-तीर्थप्रेमसुतः' इति निर्दिदेश -

'लोके पित्रोर्यथा पुत्रे ततोऽपि प्रेमतोऽधिकात्।
मां रक्षति गुरुस्तस्मात् स पिताऽहं च तत्सुतः॥'[48] इति।

**देश-कालादि**

क्रिस्तीये १८३६ तमे वर्षे मन्मथनामसंवत्सरे माघशुद्धसप्तम्यां नारायणदेवरकेरेग्रामे वेङ्कटरमणाचार्यत्रिवेणिभायिदम्पत्योः ज्येष्ठपुत्रत्वेन कृष्णावधूतोऽजनिष्ट। ग्रामश्चायं बळ्ळारिमण्डलसम्बन्धिहोसपेटे - उपमण्डले

48. कृष्णावधूतकृतराघवेन्द्रतन्त्रम् - प्रथमपटलः - श्लोक -१२. २.

वर्तते । इदानीमयं ग्रामः तुङ्गभद्राजलबन्धमध्येऽन्तर्गतः सन् न दृश्यते । कृष्णाधूतस्य कालविषये प्रो.के.टि. पाण्डुरङ्गिमहोदयाः 'अद्वैतनवनीतम्' इति कृष्णावधूतविरचितग्रन्थस्य आङ्ग्लभाषाप्रस्तावनायामेवमभिप्रायं प्राचीकटन्-

'The author of Advaithanavanitam, Sri Krishnavadhuta pandita is not far removed from us either in time or place. He lived in the last three quarters of the 19th century at Hospet near the famous historecal capital of Vijayanagar Empire'

कृष्णावधूतपण्डितपिता वेङ्कटरमणाचार्यो दरिद्रोऽपि विशालहृदयी । स्वात्मजं कृष्णं सकलविद्यापरिणतं कर्तुकामः सः बळ्ळारिमण्डलस्थसोण्डूरु-ग्रामनिवासिने भीमसेनाचार्याय दत्तकार्थमददात् । तेन मुद्दुकृष्णेति[49] कृतनामधेयः स तत्सकाशे काव्यन्यायालङ्कारव्याकरणशास्त्रेषु परिनिष्णातो भूत्वाऽगाधं पाण्डित्यं प्राप्नोत् । यदा स पञ्चदशवर्षीयस्तदैव पिता भीमसेना-चार्योऽपि स्वर्गतोऽभूत् ।

'एकादशे वत्सरेऽस्य माता स्वर्गं गता तदा ।
तस्य पञ्चदशे वर्षे भीमोऽपि त्रिदिवं गतः ॥'[50]

ततो मैसूरं नगरं प्राप्तो धीरधुरीणोऽयं तत्प्रदेशस्थरामचार्याणां सविधे पञ्चवर्षं यावद् वेदान्तविद्याध्ययनमकार्षीत् । तत्र परिनिष्ठितमतिः ग्रन्थप्रबन्धनिर्माणान्तं पाण्डित्यमवाप । त्रयोविंशतिवयस्येव मन्दारमरन्द-चम्पूरिति अलङ्कारशास्त्रीयग्रन्थरत्नमारचयत् ।

**'घटिकाशतकविः'** -

विविधसंस्कृतसाहित्यक्षेत्रकृषिकृदयं पण्डितो दक्षिणभारतसञ्चारकाले यदा

---

49. 'मुद्दु' इति कन्नडप्रादेशिकभाषाशब्दस्य 'प्रेमास्पदः' इत्यर्थः ।

50. गुरुदासविरचितकृष्णावधूतचरितम् ।

केरलभूषणायितश्रीमदनन्तशयनक्षेत्रमाजगाम तदा तत्र कस्याञ्चित् सभायां चतुर्विंशतिनिमिषकालावधौ (एकघटिकायां) शतसङ्ख्याकसंस्कृतश्लोकान् अनायासेन विरचय्य घटिकाशतकविरिति[51] प्रशस्तिमवाप्य विद्वन्मण्डल-मण्डनायितोऽभवदित्यस्य कवेश्चरित्रेतिहासेन जानीमः ।

विद्वत्कुलललामभूतो मुद्दुकृष्णाचार्यः स्वाभाविककविः तर्ककर्कशविचार-चातुरीधुरीणश्चाऽसीत् । एतद्गुणद्वयसमावेशात् तेन नैकविधाः कृतिततयो कृताः ।

कृतयः -

श्रीमदानन्दतीर्थभगवत्पादप्रतिष्ठापितद्वैतसिद्धान्ते बद्धादरोऽपि अयमद्वैत-विशिष्टाद्वैतसिद्धान्तयोरद्वितीयागाधतलस्पर्शिपाण्डित्यमाप्तवान् । तत एव 'द्वैताद्वैतविशिष्टाद्वैतनिष्णातोऽहम्' इति स्वात्मानं ख्यापयामास । अयं कविसार्वभौमो न्यायालङ्कारसाहित्यवेदान्तव्याकरणादिशास्त्रेषु त्रिंशदधिकान् ग्रन्थानारचयदिति गुरुदासकृतकृष्णावधूतचरितेन ज्ञायते । प्रो.के.टि. पाण्डुरङ्गिमहोदयाः अद्वैतनवनीतग्रन्थस्याऽङ्ग्लभाषाप्रस्तावनायां सप्तदश-ग्रन्थानुल्लिख्य 'पञ्चाशत् कृतयः अनेन कविपुङ्गवेन रचिताः' इत्यभिप्रायं प्रकटीकृतवन्तः सन्ति । तत्कृतिसङ्ग्रहश्चेत्थं कर्तुं शक्यते -

I. व्याकरणशास्त्रे - १. सुलभसाध्यव्याकरणम् ।

---

51. 'इति श्रीमद्घटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे नर्तनबिन्दुः सप्तमः समाप्तिमगमत् ।'

*मन्दारमरन्दचम्पूः पृ-७४ ।*

II. साहित्ये - २. ईहामृगी ३. पाण्डुरङ्गविलासचम्पूः ४. कृष्णावधूतनटनतन्त्रम् ५. मन्दारमरन्दचम्पूः ।

III. अलङ्कारशास्त्रे - ६. काव्यलक्षणसङ्ग्रहः ७. सारस्वतालङ्कारसूत्राणि, भाष्यं च ८. काव्यनवनीतम् ।

IV. न्यायशास्त्रे - ९. तर्कनवनीतम् १०. पदार्थसागरः ११. तर्कसङ्ग्रहवाक्यार्थविवृतिः ।

V. वेदान्तशास्त्रम् - द्वैतवेदान्ते - १२. मध्वमतसर्वस्वम् (लोकोपकारव्याख्यासहितम्) १३. मध्वतत्वसूत्राणि १४. सूत्रार्थामृतलहरी १५. अध्यात्मनवनीतम् ।

अद्वैतवेदान्ते - १६. अद्वैतनवनीतम् ।

विशिष्टाद्वैतवेदान्ते - १७) विशिष्टाद्वैतनवनीतम् ।

VI. इतरत्र - १८. श्रीराघवेन्द्रतन्त्रम् १९. व्यासस्तवराजः ।

अत्र प्रो.के.टि. पाण्डुरङ्गिमहोदयानामाभिप्रायोऽवश्यमुल्लेखनीयः ।

"Besides the above works that are available to us in manuscripts and litho-press copies, a number of other works are mentioned in his biography some of which appear to be his major works, but unfortunately lost to us. A list of manuscripts handed over by the author's son to Adyar Library contains some more names which are not mentioned in the biography also. Thus the total number of works that go under the name of Sri Krishnavadhuta actually comes to about 50'.

**उपसंहारः -**

मयाऽपि यथामति बहुप्रयासेन प्रकृतग्रन्थोपयोगिबहुविषयान् समाकलय्य

ग्रन्थाविमौ सम्पादितौ । उपलब्धैकमात्रहस्तलिखितपुस्तकानुसारेणात्र दोषदूरीकरणे उन्नतः प्रयत्नो विहितः । अतो नात्राल्पदृष्टिः कर्तव्या । प्रमादस्य स्वाभाविकत्वाद् यदत्र स्खलनं भवेत् तत् क्षमासागराः सदयहृदया विपश्चिदपश्चिमा मधुरदृशा निरीक्ष्य ससूचनं क्षमन्तामिति सविनयं निवेदयामि ॥

पूर्णप्रज्ञसंशोधनमन्दिरम्, इति सदयसहृदयवशंवदः
बेङ्गलूरु के. शङ्करनारायणाचार्य अडिगः
श्रावण-कृष्ण-अष्टमी
३१-८-२००२

# काव्यलक्षणसङ्ग्रहस्य विषयानुक्रमणिका

| विषयाः | पृष्ठसङ्ख्या |
|---|---|

| विषयाः | पृष्ठसङ्ख्या |
|---|---|


* * *

# काव्यनवनीतस्य विषयानुक्रमणिका

| विषयाः | पृष्ठसङ्ख्या |
|---|---|

| विषयाः | पृष्ठसङ्ख्या |
|---|---|

* * *

# ॥ श्रीकृष्णावधूतपण्डितकृतः काव्यलक्षणसङ्ग्रहः ॥

॥ श्रीगुरुभ्यो नमः ॥

*(मङ्गलाचरणम्)*

कृष्णाख्यं ज्योतिरालक्ष्य व्युत्पित्सुसुखबुद्धये ।
कृष्णावधूतो वक्ष्यामि काव्यलक्षणसङ्ग्रहम् ॥ १ ॥

*(काव्यलक्षणम्)*

तत्राऽदौ काव्यसामान्यलक्षणम् ।

**सालङ्कारगुणौ काव्यं शब्दार्थौ दोषवर्जितौ ।**
**तथा कवीनां समयानुरोधेन निबन्धितम् ॥ २ ॥**

शब्दार्थयोरविनाभावाद् द्विवचनम् ।

*(काव्यविभागः)*

काव्यं विभजते -

**काव्यं[1] ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा ।**

*(ध्वनिकाव्यलक्षणम्)*

ध्वनिलक्षणमाह -

**वाच्यातिशायिव्यङ्ग्यं यत् तत् काव्यं ध्वनिरिष्यते ॥ ३ ॥**

---

1. (काव्यविभागः-)
**'सर्वध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा।'**
(मन्दारमरन्दचम्पूः- शेषबिन्दुः-११. पृष्ठम् -१८६)

ध्वन्यन्ते प्राधान्येन व्यज्यन्ते व्यङ्ग्यार्था येनेति ध्वनिः[2]। सहृदयाना-मालोचनसाध्यत्वं प्राधान्यम्। वाच्यार्थादपि व्यङ्ग्यार्थस्य प्राधान्यं यत्र, तत् काव्यं ध्वनिरित्यर्थः। तथा च स्वबोध्यव्यङ्ग्यार्थनिष्ठा या वाच्यार्थाविधिका प्रधानता तत्कत्वमिति निष्कर्षः। स्वपदम् काव्यपरम्।

*(गुणीभूतव्यङ्ग्यलक्षणम्)*

गुणीभूतव्यङ्ग्यं लक्षयति -

**[3] गुणीभूतव्यङ्ग्यमस्मिन् वाच्यादनतिशायिनि।**

*(ध्वनिविभागः)*

**[4] ध्वनिस्तु लक्षणामूलाभिधामूलभिदा द्विधा ॥ ४ ॥**

**[5] तत्राऽद्ये लक्षणामूले वाच्यं स्यादविवक्षितम्।**
**विवक्षितं चान्यपरमभिधामूलकध्वनौ ॥ ५ ॥**

---

2. 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥'
(ध्वन्यालोकः. उद्योतः-१. कारिका-४)

3. (गुणीभूतव्यङ्ग्यम् -)
'काव्य तु कथितं व्यङ्ग्ये वाच्यादनतिशायिनि।
गुणीभूतव्यङ्ग्यमिति स्याद् व्यङ्ग्यस्याप्रधानतः ॥'
(म.म.चम्पूः-शेषबिन्दुः-११. पृ-१८७)
'अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये'
(साहित्यदर्पणः -परिच्छेदः-४-का-१३. पृ-३८०)

4. 'वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्।
भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥'
(सा.द.परिच्छेदः-४.का-२ -पृ-३२५)

5. तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं

आद्यस्तु लक्षणामूलो गूढव्यङ्ग्यप्रधानकः ।

*(लक्षणामूलध्वनेर्विभागः)*

अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्ततिरस्कृते ॥ ६ ॥

इति द्वेधा पुनर्द्वेधा पदवाक्यगतत्वतः ।

वाच्येऽर्थान्तरेण सम्बद्धे अर्थान्तरसङ्क्रमितं भवति । वाच्येऽत्यन्ततिरस्कृते सत्यत्यन्ततिरस्कृतवाच्यं भवति । एवदुभयमपि पदगतं वाक्यगतमिति द्विधेत्यर्थः । तथा च पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिः । वाक्यगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिः । पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः । वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिरिति चतुर्विधोऽविवक्षितवाच्यध्वनिरित्यर्थः ।

*(अर्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिलक्षणम्)*

अर्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिलक्षणमाह -

वाच्यस्यार्थान्तरत्वेन परिणामोऽन्वयेऽपि चेत् ॥ ७ ॥

तदाऽर्थान्तरसङ्क्रान्तवाच्यं चानुपयोगतः[6] ।

---

बाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत एवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् । अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा प्रदीपो घटस्य । अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः । अविवक्षितवाच्यस्य भेदावाह - अर्थान्तरमिति ॥

(साहित्यदर्पणवृत्तिः-परिच्छेदः-४-का-२-३-पृ-३२८)

6. यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः, स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम् । यथा -
'कदली कदली, करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥'

वाच्यार्थस्यान्वये सत्यपि प्रकृतानुपयोगबाधितः सन् वाच्यार्थोऽर्थान्तरत्वेन परिणामं प्राप्नोति यत्र, तत्रार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिः । एवं च सोपपत्तिकवाच्यार्थनिष्ठा याऽनुपयोगप्रयोज्या स्वभिन्नार्थत्वेन परिणामिता तत्कं तद्वत्त्वं लक्षणम् ।

पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिर्यथा -

यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु ॥ १ ॥

दौर्भिक्ष्यश्रवणखिन्नानां धार्मिकं राजानमाश्रितानां वचनमिदम् । अत्र 'जीवति' इति पदवाच्यार्थः राजजीवनस्य प्रत्यक्षसिद्धत्वादनुपयोगबाधितः सन् 'अस्माकं किञ्चिदपि भयं नास्ति' इत्यर्थान्तरे पर्यवस्यति ।

वाक्यगतोऽयं यथा -

श्रुणु मे वचनं वत्स कुरु भक्तिं वृषाकपौ[7] ॥ २ ॥

अत्र 'वत्स कुरु भक्तिं वृषाकपौ' इत्येतावतैवोपदेशसम्भवे 'श्रुणु मे वचनम्' इत्येतदनुपयोगबाधितं सदुपदेशस्य सम्यक्त्वे पर्यवस्यति ।

*(अत्यन्ततिरस्कृताविवक्षितवाच्यध्वनिलक्षणम्)*

अत्यन्ततिरस्कृताविवक्षितवाच्यध्वनिं लक्षयति -

---

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति । जाड्याद्यतिशयश्च व्यङ्ग्यः ।

(सा.द.वृत्तिः-परिच्छेदः-४-का-३-पृ-३२९)

7. 'वृषध्वजे' इति पाठान्तरमप्यस्ति ।

(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-उदाहरणश्लोकसङ्ख्या-२२९-पृ-१५४)

वाच्यार्थे त्वन्वयायोग्ये स्यादत्यन्ततिरस्कृतम्[8] ॥ ८ ॥

अनुपपत्तिप्रयोज्यार्थान्तरपरिणामवद्वाच्यार्थवत्त्वे सति व्यङ्ग्यार्थवत्त्वमिति निष्कर्षः । वाच्यार्थोऽन्वयानुपपत्त्या बाधितः सन् अर्थान्तरेण परिणतो भवतीति भावः ।

पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिर्यथा -

धवलिम्ना विलिम्पन्ति यशांसि तव दिक्तटीः ॥ ३ ॥

द्रवद्रव्यप्रतियोगिकसंयोगविशेषो लिम्पतेरर्थः । धावल्यस्याद्रवद्रव्यत्वात् स तु बाधित इति 'लिम्पति' इत्यनेन सम्बन्धमात्रं लक्ष्यते । यशसो महत्त्वं स्थिरत्वं च व्यङ्ग्यम् ।

वाक्यगतोऽयं यथा -

प्रिय त्वय्येव दाक्षिण्यं पुण्याल्लभ्योऽसि किं परम् ॥ ४ ॥

शठं प्रति मानवत्युक्तिः । अत्र शठे[9] दाक्षिण्यादेर्बाधाद् वाच्यार्थत्यागः । पापातिशयात् त्वां परिणेतवतीत्यर्थो लक्ष्यः । पराङ्गनासक्तत्वमप्रियकारित्वं च व्यङ्ग्यम् ।

---

8. यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् ।
यथा - '**निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।**'
अत्रान्धशब्दो मुख्यार्थे बाधितेऽप्रकाशरूपमर्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसङ्क्रमितवाच्यत्वम् ।
(सा.द.वृत्तिः-परिच्छेदः-४-का-३-पृ-२३१)

9. '**गूढविप्रियकृच्छठः**' (दशरूपकम्-प्रकाशः-२-का-७-पृ-८६)

*(अभिधामूलध्वनेर्लक्षणं विभागश्च)*

अथ विवक्षितान्यपरवाच्यं लक्षयति विभजते च -

**यस्तु वाच्यविवक्षायां गूढव्यङ्ग्यप्रधानकः ।**
**स विज्ञेयोऽभिधामूलध्वनिः सोऽपि द्विधा मतः ॥ ९ ॥**

**स संलक्ष्यक्रमव्यङ्ग्योऽसंलक्ष्यक्रमोऽपरः ।**

वाच्यार्थस्य विवक्षायां सत्याम् आन्ध्रकामिनीकुचवद् गूढो व्यङ्ग्यार्थो यत्र प्रधानं तत्र विवक्षितान्यपरवाच्याख्योऽभिधामूलक-ध्वनिः। तथा च विवक्षाविषयवाच्यार्थवत्त्वे सति प्रधानव्यङ्ग्यार्थवत्त्वं लक्षणम् । स द्विविधः । संलक्ष्यक्रमव्यङ्ग्योऽसंलक्ष्यक्रमव्यङ्ग्य इति । व्यञ्जकैर्व्यङ्ग्योत्पत्तिरिति क्रमो यत्र दृश्यते सम्यक्, स संलक्ष्यक्रमः । विभावानुभावसात्विकव्यभिचारिभावैः रसनिष्पत्तिरिति क्रमः ।

रसस्याऽशुतरबोधात् तादृशक्रमस्यासंलक्ष्यत्वादसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ।

*(संलक्ष्यक्रमव्यङ्ग्यस्वरूपनिरूपणं तद्विभागश्च)*

संलक्ष्यक्रमव्यङ्ग्यस्वरूपं दृष्टान्ततो निरूपयन् विभजते -

**उक्तो बुधैः स संलक्ष्यक्रमोऽनुरणनोपमः ॥ १० ॥**

**शब्दार्थोभयशक्त्युत्थः त्रिधाऽनुरणनध्वनिः ।**

शब्दशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्यध्वनिः, अर्थशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्यध्वनिः, शब्दार्थोभयशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्य-ध्वनिरिति संलक्ष्यक्रमव्यङ्ग्यध्वनिस्त्रिविधो भवति ।

*(शब्दशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यध्वनिविभागः)*

शब्दशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यध्वनिं विभजते -

अलङ्कृतेर्वस्तुनो वा प्राधान्याच्छब्दशक्तितः ॥ ११ ॥

यत्र व्यक्तिर्भवेत् सोऽयं शब्दशक्त्युद्भवो[10] द्विधा ।

पदवाक्यगतत्वेन द्विविधोऽपि पुनर्द्विधा ॥ १२ ॥

शब्दशक्त्याऽलङ्कारस्य प्राधान्येन व्यक्तौ अलङ्कारध्वनिः[11] । शब्दशक्त्या वस्तुनः प्राधान्येन व्यक्तौ वस्तुध्वनिः[12] । उभयमपि पदे

---

10. 'स्यात् पर्यायासहिष्णुत्वे शब्दशक्त्युद्भवो ध्वनिः'

(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१५५)

11. अलङ्काररूपो यथा -

दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ॥

(सा.द.परिच्छेदः-२-उदा-श्लोक-३३-पृ-८२)

अत्र प्राकरणिकस्य उमानाममहादेवी- वल्लभ-भानुदेवनाम-नृपतेर्वर्णने-द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदिति ईश्वर-भानुदेवयोरुपमानोपमेयभावः कल्प्यते । तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः । (सा.द.वृत्तिः-परि-२-का-७-पृ-३४१)

12. तत्र वस्तुरूपः शब्दशक्त्युद्भवो व्यङ्ग्यो यथा -

'पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥'

अत्र स्रस्तरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति वस्तु व्यज्यते ।

(सा.द.वृत्तिः-परि-४-का-७-पृ-३३९)

वाक्ये च भवति । एवं च शब्दशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्य-ध्वनिश्चतुर्विधः ।

१.पदगतशब्दशक्तिमूलकालङ्कारध्वनिः ।

२.वाक्यगतशब्दशक्तिमूलकालङ्कारध्वनिः ।

३.पदगतशब्दशक्तिमूलकवस्तुध्वनिः ।

४.वाक्यगतशब्दशक्तिमूलकवस्तुध्वनिश्चेति ।

*(यथाक्रममुदाहरणानि)*

पदगतशब्दशक्तिमूलकालङ्कारध्वनिर्यथा -

चित्ते स्फुरति तद्रूपं हरेर्दैत्यद्विपद्विषः[13] ॥ १ ॥ ५ ॥

अत्र हरिशब्दशक्त्या कृष्णसिंहयोरुपमालङ्कारध्वनिः ।

वाक्ये यथा -

प्रतापवानिनो भाति भजन्नुदयमुच्चकैः[14] ॥ २ ॥ ६ ॥

प्रतापः प्रभावः तापश्च । इनः प्रभुस्सूर्यश्च । उदयम् अभिवृद्धि-मुदयाचलं च । अत्र राजसूर्ययोरुपमालङ्कारध्वनिः ।

पदगतशब्दशक्तिमूलो वस्तुध्वनिर्यथा -

समरे त्वद्भुजाशौर्यं पश्यन्त्यनिमिषा द्विषः[15] ॥ ३ ॥ ७ ॥

---

13. 'इत्यत्र शब्दशक्त्युत्थः स्यात् पदेऽलङ्कृतिध्वनिः'

(म.म.चम्पू :-व्यङ्ग्यबिन्दुः-१०-पृ-१५५)

14. 'इत्यादौ शब्दशक्त्युत्थः स्याद् वाक्येऽलङ्कृतिध्वनिः'

(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३३-पृ-१५५)

15. 'इत्यादौ शब्दशक्त्युत्थः स्यात् पदे वस्तुनो ध्वनिः'

(म.म.चम्पूः-१०-श्लोक-२३४-पृ-१५५)

अनिमिषा निमेषरहिता देवाश्च । अत्र देवत्वं प्राप्ता द्विष इति अनिमिषपदशक्त्या क्षणाच्छत्रवो निहता इति वस्तु व्यज्यते ।

वाक्यगतो यथा -

अवनी च वनी च त्वद्द्विषां न दिशति स्थितिम्[16] ॥ ४ । ८ ॥

अवनी भूमिः वन्यभावश्च । अल्पं वनं वनी, काननं जलं च । स्थितिं स्थानं जीवनं च । अत्र शब्दशक्त्या राज्यभ्रष्टाः शत्रवो वनं गत्वा निर्जले मृता इति वस्तु व्यज्यते ।

*(अर्थशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यध्वनिविभागः)*

अथार्थशक्तिमूलकं संलक्ष्यक्रमव्यङ्ग्यं विभजते -

**अर्थस्य तु स्वतस्सिद्ध्या कविप्रौढोक्तिकल्पनात् ।**
**वक्तुः कविनिषिद्धस्य प्रौढोक्त्या कल्पनात् तथा ॥ १३ ॥**

**त्रैविध्यादर्थशक्त्युत्थो ध्वनिश्चापि त्रिधा मतः ।**
**वस्त्वलङ्कारभेदेन त्रिविधोऽपि पुनर्द्विधा ॥ १४ ॥**

**स व्यङ्ग्यव्यञ्जकत्वेन षड्विधोऽपि पुनर्द्विधा ।**
**पदवाक्यप्रबन्धस्थभेदात् सर्वे त्रिधा पुनः ॥ १५ ॥**

**इत्यर्थशक्तिमूलोऽयं षट्त्रिंशद्विध उच्यते ।**

तथा चेत्थं विभागः ।

१. पदगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

16. 'इत्यादौ शब्दशक्त्युत्थो वाक्ये वस्तुध्वनिर्भवेत्'
(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३५-पृ-१५५)

२. पदगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

३. पदगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

४. पदगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

५. वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

६. वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

७. वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

८. वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

९. प्रबन्धगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

१०. प्रबन्धगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

११. प्रबन्धगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

१२. प्रबन्धगतः स्वतस्सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

१३. पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

१४. पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

१५. पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

१६. पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

१७. वाक्यगतकविप्रौढोक्तिकल्पितार्थशक्तिमूलो वस्तुना वस्तुध्वनिः।

१८. वाक्यगतकविप्रौढोक्तिकल्पितार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः।

१९. वाक्यगतकविप्रौढोक्तिकल्पितार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः।

२०. वाक्यगतकविप्रौढोक्तिकल्पितार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः।

२१. प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

२२. प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

२३. प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

२४. प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

२५. पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

२६. पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

२७. पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

२८. पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

२९. वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

३०. वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

३१. वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः

३२. वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

३३. प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

३४. प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ।

३५. प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ।

३६. प्रबन्धगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ।

इत्यर्थशक्तिमूलकः संलक्ष्यक्रमव्यङ्ग्यः षट्त्रिंशद्विध इति ।

यथाक्रममुदाहरणानि ।

अद्य खड्‌गः समिच्छेदात् सफलस्त्वद्विषां वने ॥ १ ॥ ९ ॥

अद्येति पदे पूर्वं त्वया कोश एव निक्षिप्त इति वस्तु व्यज्यते ।

सदा त्वमर्थिनामाशां पूरयस्यवनीपते ॥ २ ॥ १० ॥

अत्र वस्तुना स्वतस्सिद्धेन सदेति पदे राजकल्पवृक्षयोः उपमालङ्कारध्वनिः ।

अन्येयं शौर्यसम्पत्तिरन्या तस्य वदान्यता ॥ ३ ॥ ११ ॥

अत्र भेदकातिशयोक्त्याऽन्येति पदे सर्वशत्रुनाशो व्यज्यते ।

दैन्यं सहजमावीक्ष्य तव शत्रुषु भूमिप ।
दारिद्र्यमपि तत्रैव किं मित्र विरहाकुलम् ॥ ४ ॥ १२ ॥

अत्रोत्प्रेक्षया दारिद्र्यं शत्रुष्वेव वर्तते नान्यत्रेति परिसङ्ख्यालङ्कारः, एवेति पदे व्यज्यते ।

[17]अविदूरे निशा याति किमित्यालि विलम्बसे ॥ ५ ॥ १३ ॥

---

17. 'इत्यादौ वस्तुना वस्तुध्वनिर्वाक्ये प्रकीर्तितः'

(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३६-पृ-१३५)

अत्र वाक्यार्थशक्त्या विलम्बसे चेत् प्रभाते गुरुजनावबोधादिप्रत्यूहेन तवैव प्रियसङ्गमहानिरिति वस्तुध्वनिः।

अपुनश्चरणायासं राममन्त्रः फलत्यसौ[18] ॥ ६ ॥ १४ ॥

सजातीयमन्त्रापेक्षया राममन्त्रे विशेष इति व्यतिरेकालङ्कार-ध्वनिर्वाक्ये ।

मन्वते वज्रनिर्घोषं धनुषष्टङ्कृतिं द्विषः[19] ॥ ७ ॥ १५ ॥

अत्र वाक्ये भ्रान्त्यलङ्कारेण शत्रूणां भयातिशयो व्यज्यते ।

प्राणान् मुञ्चन्ति सहजैस्त्वद्बाणैः सह वैरिणः[20] ॥ ८ ॥ १६ ॥

अत्र वाक्ये सहोक्त्यलङ्कारेणाक्रमातिशयोक्त्यलङ्कारो व्यज्यते ।

प्रबन्धगतस्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा -

भारते विराटपर्वणि भीमकीचकसंवादे द्वाविंशाध्याये भीमः,

'दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्याऽऽत्मानं प्रशंससि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥
स्पर्शं वेत्सि विदग्धस्त्वं कामागमविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥
त्वयाऽपीदृग्विधा नारी रूपशीलसमन्विता ।

18. 'इत्यादावपि वाक्ये स्याद् वस्तुनाऽलङ्कृतिध्वनिः'
(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३७-पृ-१५५)

19. 'इत्यलङ्कारतो वस्तुध्वनिर्वाक्ये प्रकीर्तितः'
(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३८-पृ-१५६)

20. 'इत्यलङ्कारतो वाक्ये विज्ञेयोऽलङ्कृतिध्वनिः'
(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२३९-पृ-१५६)

अदृष्टपूर्वां पश्येमां हर्षाविष्टस्तु कीचक ॥
द्रक्ष्यसि त्वं मुहूर्तेन यथेयं स्त्री गुणान्विता [21] ।

अत्र वस्तुना 'त्वां क्षणादेव व्यापादयामि' इति भीमतात्पर्यरूपं वस्तु व्यज्यते । एवमग्रेऽपि प्रबन्धगतध्वनिरूह्यः ।

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलध्वनिः -

नानावर्णं जगत् पूर्वं त्वत्कीर्तेरभवन्नृप [22] ॥ १३ ॥ १८ ॥

अत्र त्वत्कीर्तेः पूर्वं जगच्छुक्लनीलाद्यनेकवर्णमासीदिति वस्तुना अधुना जगदेकवर्णमिति वस्तु पदे व्यज्यते ।

मधुः प्रसूनमधुभिः ससर्ज सरितो नवाः ॥ १४ ॥ १९ ॥

अत्र सरित्पदे वस्तुना सम्बन्धातिशयोक्तिर्व्यज्यते ।

---

21. महाभारतदाक्षिणात्यपाठे एवं श्लोकक्रमो दृश्यते ।

'दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्याऽऽत्मानं प्रशंससि ।
त्वयाऽपीदृग्गुणा नारी रूपशीलसमन्विता ॥
अदृष्टपूर्वा पश्य त्वं यतो जानासि सूतज ।
द्रक्ष्यसि त्वं मुहूर्तेन यथेयं स्त्री गुणान्विता ॥
उपरंस्यसि कामाच्च शीघ्रं त्वं स्प्रष्टुमर्हसि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥
स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥'

(महाभारतम्-विराटपर्व-अध्याय-२६-श्लोक-१५-१८)

22. 'इत्यादिपु पदे वाच्यो वस्तुना वस्तुनो ध्वनिः'

(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-श्लोक-२४३-पृ-१५६)

स्मरः कुक्कुटकाहल्या निवर्तयति किं रणात् ।
द्वन्द्वानि सकलान्यद्य सोऽव्याहतपराक्रमः ॥ १९ ॥ २० ॥

अत्रोत्प्रेक्षया एतावन्तं कालं सर्वाणि मिथुनानि मैथुनकर्मण्य-विच्छिन्नं निरतानीति वस्त्वद्येति पदे व्यज्यते ।

कामः कान्ताकटाक्षास्त्रैरमोघैर्मूर्छयेज्जगत् ॥ १६ ॥ २१ ॥

अत्र वाक्यार्थहेतुकेन काव्यलिङ्गेन सजातीयमन्मथापेक्षया कान्ता-कटाक्षाणां विशेषकथनाद् व्यतिरेकालङ्कारोऽमोघैरिति पदेन व्यज्यते ।

वैरिस्त्रैणस्मितज्योत्स्नां निधुनीते भवन्महः ॥ १७ ॥ २२ ॥

अत्र वाक्ये सर्वशत्रुनाशो व्यज्यते ।

जयश्रीस्त्वां भजत्याजौ सेनाधूल्यन्धकारिते ॥ १८ ॥ २३ ॥

अत्र वाक्ये वस्तुना जयश्रियोऽभिसारिकोपमा व्यज्यते ।

सख्युः सृजति पुष्पेषोः प्रीत्यै बाणान् बहून् मधुः ॥ १९ ॥ २४ ॥

अत्र वाक्ये वसन्तकाले सर्वेऽपि कामबाधिता इति वस्तु उत्प्रेक्षया व्यज्यते ।

हसन्त्या जाह्नवीं राजन् कीर्त्या धवलितं जगत् ॥ २० ॥ २५ ॥

अत्र वाक्ये तद्गुणालङ्कारेण प्रौढोक्तिर्व्यज्यते ।

अथ कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलध्वनिः -

शठाधुना सा तनुते साहसं शशिवीक्षणे ॥ २५ ॥ २६ ॥

अत्र वस्तुना 'एतावत्कालं तव मयि प्रेमातिशयोऽस्तीति मत्वा शरीरं ररक्ष' इति वस्तु अधुनेति पदेन व्यज्यते । शशिवीक्षणस्याति-

दुःखकरत्वान्मरणोन्मुखीत्यपि साहसपदे व्यज्यते । दूतीप्रौढोक्तित्वेन कविनिबद्धत्वात् कविनिबद्धवक्तृप्रौढोक्तित्वम् ।

न श्रोताऽस्यशुभं यावत् तावदेव व्रज प्रिय ॥ २६ ॥ २७ ॥

अत्र वस्तुना सङ्कुप्ताक्षेपो व्रजेति पदे व्यज्यते ।

कुमुद्वतीव जाताऽद्य वीक्ष्येन्दुं त्वद्युता सखी ॥ २७ ॥ २८ ॥

अत्रोपमया पूर्वं म्लानतामुपगतेति वस्त्वद्येति पदे व्यज्यते ।

दृढोऽपि मानस्ते यातः प्रियागमभयादिव ॥ २८ ॥ २९ ॥

अत्रोत्प्रेक्षया प्रियप्रसादनरूपकारणाभावेऽपि मानोत्सादनरूप-कार्योत्पत्तिरिति विभावना दृढेति पदे व्यज्यते ।

प्रेमातिमानतो नश्येत् प्रसीद प्रणते प्रिये ॥ २९ ॥ ३० ॥

अत्र वाक्ये वस्तुना 'अत्यादरं कुर्वतीं सपत्नीं प्रियः सेवते, ततस्तवापि कष्टमापतेत्' इति वस्तु व्यज्यते ।

नयने स्मरतापेन शठ तस्या निमीलिते ॥ ३० ॥ ३१ ॥

अत्र वाक्ये तापस्य नेत्रनिमीलनहेतुत्वोक्त्या स्मरस्य सूर्योपमा व्यज्यते ।

नाहं दूती, तनोस्तापस्तस्याः कालानलोपमः ॥ ३१ ॥ ३२ ॥

अत्राक्षेपालङ्कारेण, मया सान्त्वोक्त्या बहुधाऽनुनीतोऽपि नाऽगच्छसि, किं तव मनोगतं कर्तव्यमिति वस्तु व्यज्यते ।

प्रवातकदलीवाऽस्ते तमालं वीक्ष्य सा हरे ॥ ३२ ॥ ३३ ॥

अत्र वाक्ये उपमया तस्याश्चित्ते मोहाधिक्यात् तमालवने मेघभ्रान्तिमदलङ्कारो व्यज्यते ।

*(शब्दार्थोभयशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यध्वनिनिरूपणम्)*

**शब्दार्थोभयशक्त्युत्थो वाक्य एवैकदा ध्वनिः[23] ॥ १६ ॥**

यथा -

मानहृद् द्विजराजोऽयं पश्य सर्वज्ञशेखरः ॥ ३४ ॥

मानहृदिति अर्थशक्त्या द्विजराजश्चन्द्रः विप्रश्रेष्ठश्च, सर्वज्ञशेखरः शिवशिरोभूषणं, ज्ञानिश्रेष्ठश्चेति शब्दशक्त्या विरुद्धहेतोः कार्योत्पत्तिरूपविभावना व्यज्यते ।

*(असंलक्ष्यक्रमव्यङ्ग्यध्वनिविभागः)*

**असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरष्टधा ।**
**रसभावरसाभासभावाभासाश्च ये मताः ॥ १७ ॥**

**भावानां शान्तिरुदयः सन्धिः शबलता तथा ।**
**एतेऽष्टौ षड्विधा वाक्ये पदे तस्यैकदेशके ॥ १८ ॥**

**वर्णेषु रचनायां च प्रबन्धेषु स्थिरत्वतः ।[24]**

---

23. 'भवेदेकविधः सोऽयं शब्दार्थोभयशक्तिजः', 'वाक्य एव भवेदेष शब्दार्थोभयशक्तिजः' (म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१५७)

'एकः शब्दार्थशक्त्युत्थे' (कारिका-९) यथा -

'हिममुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ॥'

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः ।

(सा.द.वृत्तिः-परि-४-का-९-पृ-३५३)

24. 'असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरिष्यते ।
वाक्ये पदैकदेशे च प्रबन्धे च तथा पदे ।
वर्णेषु रचनायां च गतत्वेन स षड्विधः ॥' (म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१५७)

रसध्वनिः, भावध्वनिः, रसाभासध्वनिः, भावाभासध्वनिः, भाव-शान्तिध्वनिः, भावोदयध्वनिः, भावसन्धिध्वनिः, भावशाबल्यध्वनि-रित्यष्टविधोऽसंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । एते वाक्यगताः, पदगताः, पदैकदेशगताः, वर्णगताः, रचनागताः, प्रबन्धगताश्चेति षड्विधाः ।

*(अष्टधा विभक्तस्यासंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणानि)*

रसध्वनिर्यथा -

सुप्ता स्मरदप्ता दृशि लिप्ताञ्जनसारा
ताराधिपभाराजितसाराननबिम्वा ।
बिम्बाधरबिम्बाकुललम्बालकजाला
बाला रतिलीलामनुकूलामिह धत्ते ।। १ ।। ३५ ।।

अत्र वाक्ये शृङ्गारो व्यज्यते ।[25]

---

साहित्यदर्पणेऽसंलक्ष्यक्रमव्यङ्ग्यध्वनेरेकविधत्वमेवोररीकृतम् ।
'तत्राऽद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात् सङ्ख्येयस्तस्य नैव यत् ।।' (का-५)
उक्तरूपो भावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणत्वात् क्रमोऽवश्यमस्ति । किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते । एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् । तथा हि एकस्यैव शृङ्गारस्यैकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकं च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः। का भणना सर्वेषाम् । (सा.द.वृत्तिः-परि-४-का-५-पृ-३३६)

25. रसध्वनेरुदाहरणान्तरं मन्दारमरन्दचम्पूकाव्ये -'वक्ष्ये सा कृशिमाश्लिष्टा शठोच्छ्वसिति साम्प्रतम् । अत्र वाक्ये विप्रलब्धशृङ्गारध्वनिरीरितः ।।'
(म.म.चम्पूः-व्यङ्गबिन्दुः-१०-श्लोक-२५०-पृ-१५७)

भावध्वनिर्यथा -

भूयोऽपि किं नु पश्यामि प्रियं मन्मथमन्मथम् ॥ २ ॥ ३६ ॥

अत्र वाक्ये रतिभावो व्यज्यते ।

रसाभासध्वनिर्यथा -

स्मृत्वा दन्दह्यते चेतो दृशाऽप्यस्पृशार्तीं सतीम् ॥ ३ ॥ ३७ ॥

अत्रानुरक्तायां पतिव्रतायामेकस्यैव पुरुषस्यानुरागातिशय-कथनाच्छृङ्गारस्यानौचित्येन प्रवर्तनरूपरसाभासो [25A]व्यज्यते ।

भावाभासध्वनिर्यथा -

कटाक्षयति सा बाला पुरा या मां निराकरोत् ॥ ४ ॥ ३८ ॥

अत्र शृङ्गारानुभावस्य कटाक्षस्यानौचित्यम् । स्थायिभावानामेव रसात्मना परिणामात् तेषामनौचित्यप्रवर्तने रसाभासः । तदन्येषां भावानामनौचित्येन प्रवर्तने भावाभास[26] इति भेदः ।

[27]भावशान्तिध्वनिर्यथा -

विमते विनते तस्य दृक्कोणं शोणिमाऽत्यजत् ॥ ५ ॥ ३९ ॥

---

25A. (रसाभासः-)
'रसाभासस्तु रत्यादेरनौचित्यप्रवर्तने' (म.म.चम्पूः-रम्यबिन्दुः-९-पृ-१०७)
26. (भावाभासः -)
'भावाभासस्तु भावानामनौचित्यप्रवर्तने' (म.म.चम्पूः-रम्यबिन्दुः-९-पृ-१०७)
27. (भावशान्तिः -)
'भावशान्तिस्त्वभिव्यक्ते प्रशमे व्यभिचारिणाम्'
(म.म.चम्पूः-रम्यबिन्दुः-९-पृ-१०७)

अत्रामर्षस्य शमः ।

'परगर्वशमाकाङ्क्षाऽमर्षः स्यादवमानभूः ।
अत्र स्वेदशिरःकम्पनयनारुणतादयः ॥' इत्युक्तेः ।

[28]भावोदयध्वनिर्यथा -

किमिदं कुचयोरालीत्युक्ता मुग्धा नतानना ॥ ६ ॥ ४० ॥

अत्र लज्जोत्पत्तिः ।

[29]भावसन्धिध्वनिर्यथा -

सीताकपोलमुकुरे पश्यन्नुत्पुलकं मुखम् ।
रक्षःकलकलं शृण्वन् जटां बध्नाति राघवः ॥ ७ ॥ ४१ ॥

अत्र शृङ्गारव्यभिचारिणोः वीरव्यभिचारिणोश्च हर्षधृत्योर्व्यङ्ग्यता ।

[30]भावशाबल्यध्वनिर्यथा -

फलं किं बन्धुसङ्क्षोभात् कातर्यं किं वदेज्जनः ।
का हानिः किंवदन्त्या मे द्रष्टव्या द्रौपदी कथम् ॥ ८ ॥ ४२ ॥

---

28. (भावोदयः -)

'भावोदयः स्यादुत्पत्तौ व्यङ्ग्येन व्यभिचारिणः'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८५)

29. (भावसन्धिः -)

'भावसन्धिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८५)

30. (भावशबलता -)

'पूर्वपूर्वोपमर्दे तु तेषां शवलता मता'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८५)

अत्र भीमस्योक्तौ निर्वेदशङ्काहर्षविषादानां पूर्वपूर्वोपमर्दकत्वम् ।

(आहत्य २१५४० ध्वनिभेदकथनम्-)

एवं च ध्वनयः शुद्धास्त्र्युत्तरा नवतिर्मताः ॥ १९ ॥ (९३)

एतेषां मिश्रणे भेदाश्चन्द्रवाज्यग्निसागराः । (४३७१)
चतुर्विधैः सङ्करैश्च संसृष्ट्या चैकरूपया ॥ २० ॥

पञ्चधा योजने भेदाः खाब्धिबाणेन्दुबाहवः । (२१५४०)

मिश्रणं यथा -

तदास्यं शशिसङ्काशं द्रष्टुमुत्कण्ठते मनः ॥ १ ॥ ४३ ॥

अत्र दूतीं प्रति नायकस्य वचने शशिसङ्काशमित्यनेन तत्सौन्दर्य-स्यात्युत्कटत्वात् सर्वथा तस्यामेवाऽसक्त इति पदगतः स्वतस्सिद्धार्थ-शक्तिमूलोऽलङ्कारेण वस्तुध्वनिः । यावद्वाक्येन, तां विना क्षणमपि स्थातुं न शक्नोमि तीव्रं तामानयेति वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । अनयोर्मिश्रणम् । नात्र सङ्करः । तथा हि । न तावदङ्गाङ्गिभावः । अन्योन्योत्थाप्योत्थापकत्वाभावात् । नापि सन्देह-सङ्करः । उभयोरपि वैलक्षण्यस्य स्फुटत्वात् । नापि समप्राधान्यसङ्करः। एकस्मादनेकोत्थापनाभावात् । नाप्येकवाचकानुप्रवेशसङ्करः । वाक्ये शक्त्यभावात् । नापि संसृष्टिः । प्रकृतोपयुक्तत्वेन विषयैक्यात् ।

प्रकृतानेकविषये विवक्षा यदि मिश्रिता ।
प्रकृतानुपयोगेन संसृष्टः स्यात् तदन्यतः ॥

इति वृत्तिकारोक्तेः ।

सङ्करः संसृष्टिश्च यथा -

वक्ष्ये सा कृशिमाश्लिष्टा शठोच्छ्वसिति साम्प्रतम् ।। ४४ ।।

अत्र 'वक्ष्ये' इति वाच्यार्थो वचनस्य स्फुटत्वात् प्रकृतानुपयुक्तः सन् वचनस्य याथार्थ्ये पर्यवस्यतीति पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्य-ध्वनिः । गूढविप्रियकारिणि त्वय्याशां वृथाकरोतीति वस्तुनः शठपदे प्रतीतेः पदगतकविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । 'कृशिमा-श्लिष्टा सोच्छ्वसति' इत्यनेन त्वं नाऽगच्छसि चेदनुपदमेव प्राणान् मुञ्चतीति वाक्यगतः स्वतस्सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।

अनयोरर्थशक्तिमूलकध्वन्योरङ्गाङ्गिभावसङ्करः । प्रागुक्तलक्षणामूलक-ध्वनेरनयोरर्थशक्तिमूलध्वन्योश्च संसृष्टिः । तिलतण्डुलवन्मेलने संसृष्टिः । क्षीरनीरवन्मेलने सङ्करः ।

*(पूर्वमेव लक्षितस्य गुणीभूतव्यङ्ग्यस्य विभागः)*

[31]गुणीभूतव्यङ्ग्यं विभजते -

अगूढं वाच्यसिद्ध्यङ्गं तुल्यप्राधान्यमस्फुटम् ।। २१ ।।
सन्दिग्धमपराङ्गं च काक्वाक्षिप्तमसुन्दरम् ।
इति पूर्वैर्गुणीभूतव्यङ्ग्यमष्टविधं स्मृतम्[32] ।। २२ ।।

---

31. (गुणीभूतव्यङ्ग्यम् -)
'प्रकारान्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ।।'
(ध्वन्यालोकः-उद्योतः-३-का-३४)

32. (गुणीभूतव्यङ्ग्यभेदाः -)
'तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम् ।
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम् ।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ।।'
(सा.द.परि-४-का-१३,१४-पृ-३८०-३८१)

अथ तेषां लक्षणमुदाहरणं च ।

*(अगूढलक्षणमुदाहरणं च)*

**अगूढता सहृदयैरिवान्यैरपि वेद्यता ।**

यथा -

सोऽयं विजयते राजा सुमनस्सङ्घरञ्जकः ॥ १ ॥ ४५ ॥

अत्र नृपचन्द्रयोरुपमा सर्वैरपि ज्ञायते ।

*(वाच्यसिद्ध्यङ्गलक्षणमुदाहरणं च)*

**वाच्यसिद्ध्यङ्गमेतद् यद्विना वाच्यं न सिद्ध्यति ॥ २३ ॥**

यथा -

भूभृदाभाति काश्मीरपङ्कगैरिकपाटलः ॥ २ ॥ ४६ ॥

अत्र पर्वतरूपं व्यङ्ग्यार्थं विना काश्मीरस्य केसरस्य पङ्कमेव गैरिकमिति वाच्यस्य रूपकस्य सिद्धिर्न भवति । अतः पर्वतरूप-व्यङ्ग्यार्थ आवश्यकः ।

*(तुल्यप्राधान्यलक्षणमुदाहरणं च)*

वाच्यव्यङ्ग्यार्थयोस्तुल्यं तुल्यप्राधान्यमिष्यते ।

यथा -

जातस्त्वद्वैरिसुदृशां स्मरणायाञ्जनं दृशः ॥ ३ ॥ ४७ ॥

अत्र शत्रुहननेन तत्स्त्रीणां वैधव्यप्राप्तिरिति व्यङ्ग्यार्थस्य वाच्यार्थस्य च समप्राधान्यम् ।

*(अस्फुटलक्षणमुदाहरणं च)*

**स्याद् यत् सहृदयस्यापि दुर्वेद्यं च तदस्फुटम् ॥ २४ ॥**

यथा -

भूपो गुणाहितप्रीतिर्भुनक्त्यम्बुधिमेखलाम् ॥ ४ ॥ ४८ ॥

अत्र मेखलाया गुणत्वेन गुणवतीं भूमिं गुणप्रियत्वात् पालयतीति श्लेषोत्थापितयोः परिकरपरिकराङ्कुरयोः सङ्कररूपव्यङ्ग्यार्थो न स्फुटः ।

*(सन्दिग्धलक्षणमुदाहरणं च)*

**सन्दिग्धं तत्तु कथितं व्यङ्ग्यस्य यदि संशयः ।**

यथा -

त्वामालोक्य रणे वैरी वीक्षते विजनं हयम् ॥ ४ ॥ ४९ ॥

अत्र हि यैः कैरपि दृष्टश्चेत् तत्रैवाऽगत्य राजा मां हन्यादतः सर्वैरदृष्टेन मया हयमारुह्य पलायनं कर्तव्यमितीच्छा, अथवा किं सैन्येन, अहमेक एव हयारूढो युद्धं करोमीतीच्छा वेति व्यङ्ग्ये संशयः ।

*(अपराङ्गलक्षणमुदाहरणं च)*

**अपराङ्गं यदाङ्गं चेद् रसादेस्तु रसादिकम् ॥ २५ ॥**

यथा -

क्षणे ध्वस्तखरानीकं ज़ानकी सस्वजे प्रियम् ॥ ६ ॥ ५० ॥

अत्र सम्भोगशृङ्गारस्य उत्साहोऽङ्गम् ।

*(काक्वाक्षिप्तलक्षणमुदाहरणं च)*

**काक्वाक्षिप्तं तु तत्र स्यात् यत्र काक्वा विभाव्यते ।**

यथा -

मन्ये सा सुभगा मत्तो यां त्वमेवानुधावसि ॥ ७ ॥ ५१ ॥

अत्र स्वरविकारेण सुभगत्वाभावो व्यज्यते ।

*(असुन्दरलक्षणमुदाहरणं च)*

**वाच्यान्निकृष्टं व्यङ्ग्यं चेदसुन्दरमितीर्यते ॥ २६ ॥**

यथा -

अतपःक्लेशसुकृतं ब्रह्मर्षे तव दर्शनम् ॥ ८ ॥ ५२ ॥

अत्र दर्शनजन्यस्याऽनन्दस्य व्यङ्ग्यस्याचारुत्वम् ।

*(चित्रकाव्यविभागः)*

**शब्दार्थोभयभेदेन चित्रं त्रिविधमुच्यते ।**

शब्दचित्रमर्थचित्रं शब्दार्थोभयचित्रमिति त्रिविधं चित्रम्[33] ।

---

33. (चित्रलक्षणं तु-)

**'अव्यङ्ग्यमपि यच्चारु तत् काव्यं चित्रमिष्यते'**

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८७)

**'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते। काव्ये उभे ततोऽन्यद् यत् तच्चित्रमभिधीयते॥ चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्। तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्॥'** (ध्वन्यालोकः-उद्योतः-३-कारिका-४१-४२)

'तत्र किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि । वाच्यचित्रं ततः शब्दचित्रादन्यद् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि ।'

(ध्वन्यालोकवृत्तिः-उद्योतः-३-का-४१-४२)

**'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्'**

शब्दचित्रं यथा- 'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥'

वाच्यचित्रं यथा - 'विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम् । ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥'

(काव्यप्रकाशः-उल्लासः-१-का-५-पृ-४७)

अन्वयभेद-बन्धच्युतक-न्यास-नियतगूहित-प्रहेलिकादिभेदेनानेकविधं शब्दचित्रम्। दिङ्मात्रं यथा -

गुरो हरीशौ कुरुत मुदितं सर्वदेवताः।
सुप्रभावा निमग्नं मां त्वं युवां यूयमंहसि ॥ ५३ ॥

अत्र कुरु कुरुतं कुरुतेति, सुप्रभाव सुप्रभावौ सुप्रभावा इति विभेदेनान्वयाच्चित्रता।

*(रस-भाव-अलङ्काराणां मुख्यामुख्यत्वनिरूपणम्)*

रसस्य व्यक्तयस्तिस्रो भवन्त्यभिमुखा विमुखाः परमुखाश्चेति।

यत्र विभावैरनुभावैरादावेव रसस्य स्फूर्तिस्तत्राभिमुखत्वं रसे।

यथा -

यथा यथा पश्यति तन्मुखेन्दुं पातुं प्रवृत्तो विरलाङ्गुलिः सन्।
तथा तथा प्रेमरसेन साकं सव्रीडहासा तनुतेऽम्बुधाराम् ॥१ । ५४ ॥

अत्र शृङ्गारस्यैवादावभिव्यक्तिः।

परमुखा द्विविधा, भावमुखेन अलङ्कारमुखेन चेति।

**आदौ व्यक्ते स्फुटं भावे चित्तविश्रामकारिणि ॥ २७ ॥**

**भवेद् भावस्य मुख्यत्वं रसालङ्कारगौणता।**

यथा -

कुशलं तस्याः, जीवति
कुशलं पृच्छामि, जीवतीत्युक्तम्।
पुनरपि तदेव कथयसि
मृतां नु कथयामि या श्वसिति ॥ २ ॥ ५५ ॥

अत्र मोहरूपव्यभिचारिणः प्रथमं स्फूर्तिः ।

अलङ्कारे च रुचिरे चित्तविश्रामकारिणि ॥ २८ ॥

अलङ्कारस्य मुख्यत्वं गौणत्वं रसभावयोः ।

यथा -

पाणिना बहुधा मूर्ध्नि ताडितोऽपि पतन् पदे ।
पुनःस्तनांशुकस्पर्शी कान्तः किं न हि कन्दुकः ॥ ३ ॥ ५६ ॥

अत्र च्छेकापह्नुतेरेव प्रथमं स्फूर्तिः ।

कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ २९ ॥

रसस्य विमुखत्वं स्यात् तत् काव्यमधमं स्मृतम् ।

यथा -

मैथिली लक्ष्मणो रामः सुग्रीवः पवनात्मजः ।
लङ्कापुरीं परित्यज्य पारं वारान्निधेर्ययुः ॥ ४ ॥ ५७ ॥

अत्र विभावस्य कपित्वस्य मनुष्यत्वस्य चानुभावस्य विभीषणे लङ्काधिपत्यप्रदानादेः कष्टादवगमादद्भुतो रसः कष्टात् प्रतीयते ।

*(काव्येऽवान्तरविभागाः)*

पुनश्च द्विविधं काव्यं श्राव्यदृश्यविभेदतः ॥ ३० ॥

*(श्राव्यकाव्यभेदकथनम्)*

श्राव्यं तु त्रिविधं प्रोक्तं पद्यगद्योभयात्मना[34] ।

---

34. 'पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।
पद्यं चतुष्पदी तच्च' (काव्यादर्शः-१-११)

(गद्यपद्यलक्षणम्)

अपादः पदसङ्घातो गद्यं पद्यं चतुष्पदम् ॥ ३१ ॥

गद्यकाव्यं कादम्बर्यादि, पद्यकाव्यं नैषधादि ।

(चम्पूकाव्यलक्षणम्)

गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते ।

(दृश्यकाव्यभेदकथनम्)

दृश्यं तु दशधा प्रोक्तं नाटकादिविभेदतः ॥ ३२ ॥

नाटकं च प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥ ३३ ॥

(पुनः काव्यभेदकथनम्)

महाकाव्यं चोपकाव्यमिति तद् द्विविधं पुनः ।

(महाकाव्यलक्षणम्)

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥ ३४ ॥

उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ॥ ३५ ॥

मन्त्रद्यूतप्रयाणाद्यैर्नायकाभ्युदयैरपि ।
निबद्धं चेन्महाकाव्यं[35] ससर्गं वाऽप्यसर्गकम् ।

35. (महाकाव्यलक्षणम्-)

'सर्गवन्धो महाकाव्यमिति केचित् प्रचक्षते ।
असर्गबन्धमपि च महाकाव्यमितीष्यते ॥'

(म.म.चम्पू-शेषबिन्दुः-११-पृ-१८७)

(उपकाव्यलक्षणम्)

गीततालानुबद्धं चेत् तन्न्यूनमुपकाव्यकम् ॥ ३६ ॥

उपकाव्यं कविकल्पिततयाऽनेकविधमूह्यम्[36] ॥

॥ इति श्रीकृष्णावधूतपण्डितकृतः काव्यलक्षणसङ्ग्रहः समाप्तः ॥

---

'सर्गवन्धो महाकाव्यं तत्रैको नायकः सुरः ॥ सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः । एकवंशभवा भूपाः कुलजा बहवोऽपि वा ॥ शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते । अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ॥ इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् । चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ॥ आदौ नमस्क्रियाऽऽशीर्वा वस्तुनिर्देश एव वा । क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ॥ एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः । नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ॥ नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते । सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ॥ सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः । प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥ सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः । रणप्रयाणोपयममन्त्रपुत्रोदयादयः । वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥' (सा.द.परि-६-का-३१६-३२३-पृ-६३३-६३४)

'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् ॥ इतिहासकथोद्भूतमितरद् वा सदाश्रयम् । चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥ नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥ अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् । सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥ सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ॥' (काव्यादर्शः-परि-१-श्लोक-१४-१९)

36. सूत्रम् - उपकाव्यं गीततालानुबन्धम् ॥ २ ॥
भाष्यम् - आख्यायिका, कथा, भोगावली, तारावली, बिरुदावली, रत्नावली, पञ्चाननावलीत्याद्युपकाव्यं तालानुबद्धमनेकविधम् ।
(चमत्कारचामीकरम् -अध्यायः-५-सूत्रम्-२)
एतेषां लक्षणोदाहरणादीनि कृष्णावधूतकृते मन्दारमरन्दचम्पूकाव्ये शेषबिन्दौ (११) १८७ पृष्ठे द्रष्टव्यानि ।

# ।। अथ श्रीकृष्णावधूतपण्डितविरचितं काव्यनवनीतम् ।।

## ।। प्रथमगोलकम् ।।

### *(पदार्थनिरूपणम्)*

(अत्राऽदौ त्रीणि पत्राणि न दृश्यन्ते[1])

### *(पदार्थनिरूपणे गुणनिरूपणम्)*

चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वम् । स्वाभावसामानाधिकरण्यमव्याप्यवृत्तित्वम् । संयोगोऽप्यव्याप्यवृत्तिः ।

श्रोत्रस्थशब्द उद्भूतः । गन्धादयस्त्विन्द्रियवृत्तयोऽनुद्भूताः ।

सर्वद्रव्यवृत्तयः सामान्यगुणास्तदन्ये विशेषगुणाः । ज्ञानेच्छाकृतिसुखदुःखद्वेषसंस्कारशब्दसंयोगेषु कर्माङ्गीकारादेकदेशे उत्पत्तावपि तद्देशत्यागपूर्वकमन्यदेशगतेरानुभविकत्वादव्याप्यवृत्तित्वम् ।

### *(कर्मनिरूपणम्)*

उपरञ्जनेन जातिमात्राश्रयः कर्म । तत् पञ्चविधम् । व्यापारो विधिर्वेगो निषेधश्चलनमिति । व्यापारः शब्दे शक्तिर्लक्षणा व्यञ्जना चेति त्रिविधः । वेगः पृथिवीजलतेजोवायुवासनात्ममनस्सु । विधिनिषेधौ जीवमात्रवृत्ती । चलनं कालादिव्योमवर्जितेषु द्रव्येषु ।

ज्ञानेच्छाकृतिसुखदुःखद्वेषसंस्कारव्यापारविधिनिषेधेन्द्रियाणि व्रीडादिमनोविकाराश्च सविषयकाः ।

---

1. अत्र पदार्थनिरूपणात्मके प्रथमगोलके द्रव्यगुणनिरूपणान्तो भागोऽनुपलब्धः । तथाऽपि यावदुपलब्धं तावदेव सम्पादितम् । उत्तरत्र उपलप्सते चेत् तदुपयोगो पुनर्मुद्रणेऽवश्यम्भावी ।

### (सामान्यनिरूपणं तद्भेदकथनं च)

[2]सामान्यं द्विविधम् । जातिरुपाधिश्चेति । उभयमपि द्विविधम् । आश्रयस्य नित्यत्वे नित्यम् । यथा जीवत्वम् । आश्रयानित्यत्वे त्वनित्यम् । यथा घटत्वादि । आकृत्यपरपर्याया जातिरिति वैयाकरणाः।

### (जातिलक्षणम्)

रूढिग्रहे प्रकारतया भासमानो धर्मो जातिरनुगता ।

### (उपाधिलक्षणम्)

योगग्रहे प्रकारतया भासमानो धर्मो उपाधिः, प्रमेयत्वादिः, अननुगतः। एकस्यैकेन वृत्तिनियामकसम्बन्धेनानेकवृत्तित्वमनुगतत्वम् । पुनर्द्विविधम् । व्याप्यं व्यापकं च । अल्पदेशवृत्ति व्याप्यम् । अधिकदेशवृत्ति व्यापकम् । जातिबाधकं साङ्कर्यव्यक्त्यैक्यमनवस्था च ।

### (अभावभेदकथनम्)

अभावः पञ्चविधः । प्रागभावो ध्वंसो नित्यात्यन्ताभावोऽनित्यात्यन्ताभावो भेदश्चेति । कार्योत्पत्तेः पूर्वमुपादाने स्थितः प्रागभावः ।

---

2. (पदार्थनिरूपणम्-)

पदार्थस्तु द्विधा प्रोक्तो भावाभावविभेदतः ।
भावश्चतुर्विधो जातिगुणद्रव्यक्रियात्मना ॥
जातिस्तु द्विविधा प्रोक्ता सामान्योपाधिभेदतः ।
सामान्यं तु घटत्वादिरुपाधिश्चन्द्रतादिकः ॥
गुणास्त्वनेके कथिता गन्धरूपरसादयः ।
द्रव्यं तु दशधा पृथ्वीजलतेजःप्रभञ्जनः ॥
तमोव्योमात्मदिक्कालमनांसीति विभेदतः ।

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१९५)

कार्यनाशानन्तरं कपालादौ स्थितः ध्वंसः । अप्रामाणिकप्रतियोगिकोऽभावो नित्यात्यन्ताभावः । यथा शशविषाणाद्यभावः । प्रामाणिकप्रतियोगिकोऽत्यन्ताभावस्त्वनित्यः । यथा घटाभावः । उभयमनुगतम् । तादात्म्याभावो भेदः । यथा 'घटः पटो न' इति । नित्याभावभेदौ केवलान्वयिनौ ॥

॥ इति श्रीकृष्णावधूतपण्डितकृते काव्यनवनीते
पदार्थनिरूपणं नाम प्रथमगोलकम् ॥

---

॥ अथ द्वितीयगोलकम् ॥

## (प्रमानिरूपणम्)

### *(कारणनिरूपणम्)*

कार्यनियतपूर्ववृत्ति कारणम् । तद् द्विविधम् । उपादानमपादानं चेति । परिणाम्युपादानम् । तद्भिन्नं कर्त्रादि निमित्तम् । द्रव्यमेवोभयम् । अन्यन्निमित्तमेव । निमित्तकारणं द्विविधम् । नाशनिमित्तमनाशनिमित्तं चेति । कार्योत्पादकं कार्यनाशप्रयोजकनाशप्रतियोगि आद्यम् । यथा तन्तुसंयोगः पटस्य । तुरीवेमादि द्वितीयम् । रुद्रभट्टादयस्तु कार्यगुणं प्रति उपादानगतगुणोऽपि परिणामकारणमेवेति वदन्ति । साधकतमं करणम् ।

### *(ज्ञानविभागः)*

ज्ञानं द्विविधम् । स्मृतिरनुभवश्चेति ।

### *(स्मृतिनिरूपणम्)*

संस्कारजन्यं ज्ञानं स्मृतिः ।

(अनुभवनिरूपणम्)

तद्भिन्नं ज्ञानमनुभवः । अनुभवजन्या भावना । उभयमपि द्विविधम् । प्रमा भ्रमश्चेति । यथार्थावगाहिनी प्रमा । विशेष्यावृत्तिप्रकारकज्ञानं भ्रमः ।

(भ्रमभेदकथनम्)

भ्रमो द्विविधः । विपर्ययः संशयश्चेति । विपर्ययोऽन्यथानिश्चयः । एकस्मिन् विरुद्धानेकप्रकारकज्ञानं संशयः । विरोधोऽसामानाधिकरण्यम् । भावाभावयोरेव विरोध इति न नियमः । प्रमाजन्या स्मृतिः यथार्थस्मृतिः। द्विविधभ्रमजन्या स्मृतिरयथार्था ।

(प्रमानिरूपणम्)

यथार्थानुभवः प्रत्यक्षादिभेदेन द्वादशविधः । प्रमाकरणं प्रमाणम् । भ्रमकरणमप्रमाणम् ।

(प्रमाणनिरूपणम्)

प्रमाणानि द्वादश । प्रत्यक्षानुमानोपमानशब्दाचारात्मतुष्ट्यर्थापत्त्यनुपलब्धिसम्भवैतिह्यपरिशेषतर्का इति ।

(प्रत्यक्षनिरूपणम्)

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् । तच्चेन्द्रियम् । सन्निकर्ष अनेकविधः । द्रव्यप्रत्यक्षे संयोगः सन्निकर्षः । द्रव्यगतगुणप्रत्यक्षे संयुक्तोपरञ्जनम् । समवायस्थाने उपरञ्जनमाधाय सर्वं न्यायमतवद् बोध्यम् ।

(अनुमाननिरूपणम्)

अनुमतिकरणमनुमानम् । 'पर्वतो वह्निमान् धूमात् 'इत्यत्र प्रथमतः पर्वते धूमप्रत्यक्षं, ततो व्याप्तिस्मरणं, पश्चादनुमितेरानुभाविकत्वात् पक्षधर्मताज्ञानं करणम् । व्याप्तिस्मरणं व्यापारः । अनुमितिः फलम् ।

प्राञ्चस्तु व्याप्तिज्ञानं करणं, परामर्शो व्यापार इति वदन्ति । अन्यत् सर्वं हेत्वाभासास्तर्कच्छलजातिनिग्रहस्थानानि च न्यायमतवत् ।

(उपमाननिरूपणम्)

अतिदेशवाक्यार्थस्मरणजन्यं शक्तिज्ञानमुपमितिः । तत्करणमुपमानं[3] सादृश्यज्ञानम् । अन्यन्न्यायमतवत् ।

(शब्दप्रमाणनिरूपणम्)

आप्तवाक्यं प्रमाणशब्दः करणम् । पदार्थोपस्थितिर्व्यापारः । शाब्दबोधः फलम् । प्रथमान्तार्थमुख्यविशेष्यकः क्रियामुख्यविशेष्यकश्च बोधः । यत्र क्रिया उपमानोपमेययोः साधारणधर्मतया निर्दिश्यते तत्र प्रथमान्तार्थो विशेष्यम् । 'मुखं चन्द्र इव भासते' इत्यादौ चन्द्रनिरूपितसादृश्यप्रयोजकभासनवन्मुखमिति । 'लिम्पतीव तमोऽङ्गानि' इत्यादौ तमःकर्तृकाङ्गकर्मकलेपनमिति । अन्यथा अनुक्तवस्तूत्प्रेक्षालोपः ।

(शब्दवृत्तिभेदकथनम्)

[4] शब्देनार्थबोधे व्यापारभूता शब्दवृत्तिस्त्रिविधा । अभिधा लक्षणा

---

3. (उपमानम्-)

'उपमानं चातिदेशवाक्यार्थज्ञानमिष्यते' (म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१५१)

4. (शब्दः-)

'शब्दस्तु त्रिविधः शक्तलक्षकव्यञ्जकात्मना।
साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥
भवेल्लाक्षणिकः शब्दो लक्षणायाः समाश्रयः।
व्यञ्जकः स भवेच्छब्दो व्यञ्जनायाः समाश्रयः।
तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः ॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७७)

व्यञ्जना चेति । अभिधा शक्तिरेव । शक्तिग्रहे कोशादिः सहकारी[5] ।

5. (शक्तिग्रहोपायाः-)

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥' (मुक्तावली -शब्दखण्डः)

धातुप्रकृतिप्रत्ययादीनां व्याकरणाच्छक्तिग्रहो भवति । यथा -भू सत्तायाम्', 'डु पचष् पाके' इति व्याकरणाद् भ्वादीनां धातूनां सत्ताद्यर्थे शक्तिर्गृह्यते। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रेण लकाराणां कृतौ शक्तिग्रहः । लटः 'वर्तमाने लट्' इति सूत्राद् वर्तमानकालवाचकत्वं ज्ञायते ।

अतिदेशवाक्यार्थज्ञानमेवोपमानम् । तेन च 'अयं गवयपदवाच्यः' इत्याद्याकारकोपमितिः शक्तिग्रहात्मिका जायते ।

'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इति कोशान्नाकशब्दस्य स्वर्गे शक्तिग्रहः।

आप्तवाक्याच्छक्तिग्रहो यथा -'कोकिलः पिकपदवाच्यः' इति वाक्यात् पिकपदस्य कोकिले शक्तिग्रहः ।

व्यवहारः क्रिया । यथा -प्रयोजकवृद्धेन गामानयेत्युक्ते प्रयोज्यवृद्धः गामानयति । तदवधार्य समीपस्थो बालो गवानयनरूपं कार्यं 'गामानय' इति शब्दप्रयोज्यमिति निश्चिनोति । ततः 'गां नय' 'अश्वमानय' इत्यादिवाक्यादावापोद्वापाभ्यां गोपदस्याश्वपदस्य च सास्नादिमत्त्वैकशफवत्त्वादिविशिष्टव्यक्तिविशेषयोः शक्तिं गृह्णाति ।

वाक्यशेषाच्छक्तिग्रहो यथा -'यवमयश्चरुर्भवति' इत्यत्र वाक्ये श्रुतो यवशब्दो वृद्धव्यवहाराद् दीर्घशूकविशिष्टव्रीहिवाचक उत, म्लेच्छव्यवहारात् प्रियङ्गुवाचकः, आहो कर्नाटकव्यवहारात् क्षेत्रगोधूमवाचक इति संशये - 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥' इति वाक्यशेषाद् दीर्घशूकविशिष्टे शक्तिग्रहः । अत्र वाक्यशेषो नाम शिष्टवाक्यं, परिसङ्ख्यावाक्यमिति तात्पर्यार्थः । एतादृशवाक्यजन्यशाब्दबोधाच्छक्तिग्रहो भवति ।

विवरणाद् यथा -'पचति' इत्यस्य 'पाकं करोति' इति विवरणाद् आख्यातस्य यत्ने शक्तिग्रहः । यथा वा 'घटोऽस्ति' इत्यस्य 'कलशोऽस्ति' इति विवरणाच्छक्तिग्रहः।

सिद्धपदसान्निध्याद् यथा - 'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ 'सहकारतरौ मधुररावकर्ता कोकिल एव' इति निश्चयवतः पिकशब्दस्य कोकिले शक्तिग्रहः ॥

(अभिधाभेदकथनम्)

[6]अभिधा त्रिविधा । योगो रूढिर्योगरूढिरिति ।

(पदभेदकथनम्)

पदमपि त्रिविधम् । [7]यौगिकं रूढं योगरूढमिति ।

---

6. (अभिधा-)

**व्यापारःशक्यधीहेतुर्मुख्यः शब्दगतोऽभिधा ।**
**रूढिर्योगो योगरूढिरिति सा त्रिविधा मता ।।**
**रूढिस्त्वखण्डशक्त्यैव स्यादेकार्थाभिधायिता ।**
**पदं रूढं बुधाः प्रोचुस्तादृग्रूढिसमाश्रितम् ।।**
पीनौ वध्वाः कुचावेतौ मुक्ताहारेण राजतः ।
**योगोऽवयवशक्त्यैव स्यादेकार्थाभिधायिता ।**
**यौगिकं कथ्यते प्राज्ञैर्योगेन सहितं पदम् ।।**
रागिन् कान्तापदाघातः कामिनस्तेऽस्य साम्प्रतम् ।
**योगरूढिस्तु शक्तिभ्यामेकार्थप्रतिपादकः ।**
**ब्रुवते योगरूढं तद्योगरूढियुतं पदम् ।।**
मृगाक्षी पद्मनाभस्य मन्दिरे वसतान्मम ।
**वैशेषिकास्तु ब्रुवते पदं यौगिकरूढिकम् ।**
**रूढ्या चैकार्थकं योगेनान्यार्थं चोद्भिदादि तत् ।।**

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७८)

7. तत्र अवयवार्थानुसन्धानेन अर्थबोधिका शक्तिर्योगः । यत्र अवयवार्थ एव बुध्यते तत् पदं यौगिकम् । यथा पाचकादिपदम् । अवयवार्थानुसन्धानमन्तरा अर्थबोधिका शक्तिः रूढिः । एवं च अवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण यतो बोधो जायते तत्पदं रूढम् । यथा गवादिपदम् । अवयवार्थसमुदायार्थोभयबोधिका शक्तिः योगरूढिः । एवं च यत्र अवयवशक्तिविषये समुदायशक्तिरप्यस्ति, तत्र तादृशोभयशक्त्याऽर्थबोधो भवति । तत् पदं योगरूढम् । यथा पङ्कजादिपदम् । अत्र अवयवशक्त्या पङ्कज-निकर्तृरूपार्थबोधः । समुदायश[illegible] पद्मबोधः ।

*(अर्थभेदनिरूपणम्)*

अर्थोऽप्येवमेव त्रिविधः ।

*(लक्षणास्वरूपनिरूपणं तद्भेदकथनं च)*

शक्यसम्बन्धिबोधकव्यापारो लक्षणा[8] । सा दशधा । गौणी निरूढ-

---

8. (लक्षणा-)

'तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः ।
शक्यभिन्नार्थधीहेतुर्व्यापारो लक्षणेष्यते ॥
द्विविधा सा रूढिपूर्वा फलपूर्वेति भेदतः ।
तत्राऽद्या व्यङ्ग्यरहिता सव्यङ्ग्या फललक्षणा ॥
स्याद्रूढिलक्षणा द्वेधा गौणी शुद्धेति भेदतः ।
शक्यसादृश्यसम्बन्धरूपा गौणीत्युदीरिता ॥
सा शुद्धा सादृश्यभिन्नशक्यसम्बन्धरूपिणी ।
जहती चाप्यजहती जहत्पूर्वा जहत्यपि ॥
सारोपा साध्यवसितिरित्यन्या पञ्चधा मता ।
सा जहल्लक्षणा यत्र स्वार्थं हित्वाऽन्यवृत्तितः ॥
स्वसिद्धये पराक्षेपे त्वजहल्लक्षणा मता ।
स्वार्थैकदेशवृत्तौ तु जहत्यजहती मता ॥
सारोपोपात्तविषयिविषयाभेदबोधिनी ।
सारोपा द्विविधा सा तु गौणी शुद्धेति भेदतः ॥
सादृश्यात्मकसम्बन्धरूपा गौणीति कीर्तिता ।
अन्या तदन्यसम्बन्धरूपा शुद्धेति कीर्त्यते ॥
निगीर्य विषयं यत्र विषय्येव निबध्यते ।
तत्र साध्यवसाना स्यात्कविप्रौढोक्तिसम्मता ॥

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७८-१७९)

'लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः' (कारिकावली -शब्दखण्डः)

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया ॥' (काव्यप्रकाशः उल्लास-२-का-९)

लक्षणा, शुद्धा निरूढलक्षणा, जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, गौणी सारोपलक्षणा, शुद्धा सारोपलक्षणा, विषयिसाध्यवसानलक्षणा, विषयसाध्यवसानलक्षणा, लक्षितलक्षणा[9] चेति ।

*(गौणीशुद्धानिरूढलक्षणयोरुदाहरणम्)*

'प्रवीणेयं मनो हन्तुं मोहिनी पुष्पधन्वनः' ॥ १ ॥

प्रवीणेत्यत्राऽद्या । पुष्पपदे द्वितीया ।

*(जहल्लक्षणोदाहरणम्)*

'साक्षी मुकुन्दकेलीनां यमुनायामयं व्रजः '॥ २ ॥

यमुनापदे तृतीया ।

*(अजहल्लक्षणोदाहरणम्)*

'वीक्ष्यानुद्रवतः कुन्तान् द्रवन्ति च्छत्रिणो रणात्' ॥ ३ ॥

कुन्तपदे अजहल्लक्षणा ।

*(जहदजहल्लक्षणोदाहरणम्)*

'त्वदपाङ्गतरङ्गेभ्यो यममन्ये तृणाय न' ॥ ४ ॥

'तस्या एव त्वया सोऽहं प्रदत्तः करवाणि किम्'[10] ॥ ५ ॥

---

9. यत्र शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणा । यथा - 'द्विरेफं पश्य' इत्यत्र स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपपरम्परासम्बन्धेन द्विरेफपदाद् भ्रमरबोधः । स्वं द्विरेफपदं, तत्सम्बन्धः भ्रमरपदे, तत्सम्बन्धश्च भ्रमररूपार्थे इति ॥

10. (जहदहजहल्लक्षणोदाहरणम्-)
पुष्पितं वनमालोक्य सोऽयं पान्थः स्मराहतः ॥
(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७९)

तरङ्गेभ्य इति कर्मणि पञ्चमी ल्यपो लोपमाश्रित्य । 'मन्यकर्मण्य-नादरे' इति तृणायेति चतुर्थी । अत्र यत्तच्छब्दयोर्जहदजहल्लक्षणा ।

*(गौणीशुद्धासारोपलक्षणोदाहरणम्)*

'मुखेन्दुर्नयनानन्दस्तन्वङ्गि तव राजते' ॥ ६ ॥

मुखे गौणी सारोपा । नयने शुद्धा सारोपा ।

*(विषयिसाध्यवसानलक्षणोदाहरणम्)*

'इन्दीवरदलाच्चित्रं निस्सरन्ति सिताः शराः' ॥ ७ ॥

इन्दीवरपदे उपमानसाध्यवसानलक्षणा ।

*(विषयसाध्यवसानलक्षणोदाहरणम्)*

'कचभारात् कुचभारः, कुचभाराद् भीतिमेति कचभारः ।
कचकुचभाराज्जघनं, कोऽयं चन्द्रानने चमत्कारः '॥ ८ ॥

कचादिपदेषूपमेयसाध्यवसाना ।

*(लक्षितलक्षणानिरूपणमुदाहरणं च)*

पर्यायपदवाच्यार्थे लक्षितलक्षणा ।

'गोपीभिर्नयनं देहीत्यर्थितोऽपाहसद्धरिः ।
दाम चेद् यात सदनमत्रायातांशुकं यदि' ॥ ९ ॥

अत्र नयनपदस्य नेत्रपदद्वारा मन्थनदामवस्त्रयोर्लक्षणा । विवक्षित-शाब्दबोधानुपपत्तिर्लक्षणाबीजम् । लक्षणाप्रयोजनबोधस्तु व्यञ्जनया । उक्तं च मकरन्दे[11] -

---

11. मन्दारमरन्दचम्पूः-शेषबिन्दुः-११-पृ-१७९.

'प्रयोजनाविशिष्टस्य लक्षणैव न युज्यते।
लक्ष्याभिधेयाभ्यामन्यद्यतो वाच्यं प्रयोजनम्॥

तस्माल्लक्ष्ये प्रतीते तु पावनत्वादिबोधने।
अभिधालक्षणाभिन्ना व्यञ्जनैवात्र कारणम्'॥ इति।

(व्यञ्जनानिरूपणम्)

वाच्यलक्ष्यभिन्नार्थबोधको व्यापारो व्यञ्जना[12] । वाक्यार्थोपस्कारः प्रयोजनम् । सा त्रिविधा । शब्दशक्तिमूला अर्थशक्तिमूला तदुभय-शक्तिमूला चेति । श्लेषे शब्दशक्तिमूला । यथा-

'सामोदसुमनोजातजुष्टो जयति माधवः' ॥ १० ॥

अत्र नान्दीपद्ये प्रकृते कृष्णपक्षे शक्तिः । अप्रकृतवसन्तपक्षे व्यञ्जनेति प्राञ्चः । एकदोच्चारितस्य व्यञ्जनां विना वृत्तिद्वयस्यानङ्गीकारात् । 'गङ्गायां मीनघोषौ' इत्यादेः पूर्वैरप्रयुक्तत्वेनाप्रामाणिकत्वात् ।

नव्यास्तु उभयत्र शक्तिः । उपमाद्यलङ्कारवस्तुध्वनौ तु व्यञ्जनेत्याहुः ।

'प्रातश्चेन्नाथ! को दोषः श्रान्तोऽसि स्वपिहि क्षणम्' ॥ ११ ॥

इत्याद्यश्लेषेऽर्थशक्तिमूला । नात्रानुमानशङ्का । एककार्येण परम्परयाऽनेककारणप्रतीतेरनुमानमार्गविरुद्धत्वात् । श्लिष्टाश्लिष्टपदैः प्रकृताप्रकृतयोः साम्यादिप्रतीतौ शब्दार्थोभयशक्तिमूला ।

---

12. (व्यञ्जना-)
'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।
नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७९)

'मल्लीलाभोपेतः कमलोपेतो रसालसहितश्च ।
कुवलयमञ्जुरशोकोल्लासो मे हृदयतापकोऽयमसौ' ॥१२॥

*(शब्दार्थानामनेकत्वे विशेषस्मृतिहेतुनिरूपणम्)*

श्लिष्टपदानां विवक्षितार्थबोधेऽपि संयोगादयः सहकारिणः[13] । एतद्विस्तरस्तु मत्कृतौद्दालकीयालङ्कारसूत्रभाष्ये द्रष्टव्यः ।

---

13. **संयोगो विप्रयोगश्च साहचर्यं विराधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थानेकतायां चेद्विशेपस्मृतिहेतवः ॥**
**संयोगस्तु स्ववाच्यैकनिष्ठार्थान्तरसन्निधिः ।**
पुष्णात्यधिकां लक्ष्मीं शङ्खचक्रधरो हरिः ॥
**विप्रयोगस्तु संयोगाभाव एव निगद्यते ॥**
अशङ्खचक्रः स हरिरपिनाको भवो भवान् ।
**साहचर्यं स्ववाच्यैकवस्तुनः सहचारिता ।**
वन्दारुजनमन्दारौ रामकृष्णौ नमाम्यहम् ॥
**सहानवस्थितिर्वध्यहन्तृत्वं च विरोधिता ॥**
दिनं निशां च संयुध्य रामोऽजैषीद्दशाननम् ।
**अर्थः प्रयोजनं स्थाणुं संसारच्छित्तये भजे ॥**
**विदुः प्रकरणं वक्तृश्रोतृबुद्धिस्थितं बुधाः ।**
जानाति सकलं देवः प्रश्नोऽयं वितथोऽधुना ॥
**लिङ्गं स्ववाच्यान्तरेभ्यो व्यावृत्तो धर्म इष्यते ।**
जय्यो जगति केनैष कुपितो मकरध्वजः ॥
**सामानाधिकरण्यं यन्नियतार्थपदे हि तत् ।**
**शब्दान्तरस्य सान्निध्यं देवोऽव्यात् त्रिपुराहितः ॥**
**सामर्थ्यं स्यात् कारणत्वं मत्तोऽयं मधुना पिकः ।**

*(अर्थभेदकथनम्)*

अर्थः[14] त्रिविधः । शक्यो लक्ष्यो व्यङ्ग्यश्चेति । वक्तृतात्पर्यार्थोऽपि व्यङ्ग्यार्थ एव ।

*(त्रिविधानामप्यर्थानां व्यञ्जकत्वम्)*

त्रिविधोऽप्यर्थो व्यञ्जको भवति ।

*(त्रिविधार्थैर्व्यङ्ग्यार्थोपस्थापने सहकारिकथनम्)*

तत्र-

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।**
**प्रस्तावदेशकालादेर्विशेषाः सहकारिणः ॥ १३ ॥**

---

औचित्यन्वययोग्यत्वं गच्छत्यारुह्य सैन्धवम् ॥
देशः पुरादी राजाऽत्र नगरे राजते मुहुः ।
कालो निशादिस्तामस्यां चित्रभानुर्विराजते ॥
पुंलिङ्गादिर्भवेद्व्यक्तिर्मित्रो भात्युदयं गतः ।
उदात्तादिः स्वरादिः स्यादिन्द्रशत्रो इति श्रुतौ ॥
यतोऽर्थधियमुत्पाद्य शब्दोऽर्थान्तरबुद्धिकृत् ।
ततोऽर्थो व्यञ्जकः शब्दसहकारितया मतः ॥

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८०-१८१)

14. (अर्थः-)

'शव्दस्तु त्रिविधः शक्तलक्षकव्यञ्जकात्मना ।
साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥
भवेल्लाक्षणिकः शब्दो लक्षणायाः समाश्रयः ।
व्यञ्जकः स भवेच्छब्दो व्यञ्जनायाः समाश्रयः ।
तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः ॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७७)

अस्तङ्गतोऽद्य सविता पथिक क्व प्रयास्यसि ॥ १४ ॥

अत्र वक्त्र्यां कुलटात्वविशेषज्ञानात् सुरताभिलाषः प्रतीयते । एतद्विस्तारोऽपि[15] मत्कृतेऽलङ्कारसूत्रभाष्ये द्रष्टव्यः । अभिधालक्षणे पदे,

---

15. 'प्रातश्चेन्नाथ को दोषः श्रान्तोऽसि स्वपिहि क्षणम् ।
अत्र बोद्धव्यवैशिष्ट्याद्वक्तृकोपः प्रतीयते ॥
सखि श्रुत्वाऽपि मामेवं नानुतापमुपैति सः ।
इत्यादौ काकुवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥
स्वप्नेऽपि नास्मरः प्राङ् मां भाग्येनाद्यागतोऽसि मे ।
इत्यादौ वाक्यवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥
शून्या प्रपेयमेकाकिन्यस्मि पान्थाऽस्यतां क्षणम् ।
इत्यादौ वाच्यवैशिष्ट्यज्ञानाद् व्यङ्ग्यार्थनिश्चयः ॥
एकाकिन्येव यास्यामि जलार्थं कथमापगाम् ।
इत्यादिषु व्यङ्ग्यबुद्धिर्वैशिष्ट्यादन्यसन्निधेः ॥
वयस्ये प्रतिवेशिन्याः पतिरस्य समागतः ।
अत्र प्रस्ताववैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥
सख्यो दूरं गता गन्तुमक्षमाऽहमिह स्थिता ।
इत्यादौ देशवैशिष्ट्यज्ञानाद् व्यङ्ग्यार्थधीर्मता ॥
गृहकृत्यव्यापृताया विश्रामोऽद्यैव मे सखि ।
इत्यादौ कालवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥
फलानि दिश भव्यानि निवेश्य मणिबन्धने ।
बिम्बस्य चुम्बनेनैव सखि लालय मा शुकम् ॥
इत्यादिषु च लक्ष्यस्य व्यञ्जकत्वं प्रकीर्तितम् ।
गच्छ गच्छसि चेत्कान्त वरस्तत्रैव मे भवः ॥
इत्यादौ व्यञ्जकत्वं च व्यङ्ग्यार्थस्य भवेद्ध्रुवम् ।
शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८१)

व्यञ्जना तु पदवाक्ययोः ।

*(शिष्टाचाराद्यष्टप्रमाणनिरूपणम्)*

शिष्टाचारज्ञानं फलनिर्धारणे करणम् ।

मनःप्रवृत्तिर्धर्मनिर्धारणे करणम् ।

अन्यथानुपपत्त्या कारणकल्पनमर्थापत्तिः । सा च दृश्यवस्तुव्यवस्थायां करणम् ।

अनुपलब्धिरभावज्ञाने करणम् । सम्भवो वस्तुसम्भावना । सा चास्तित्वज्ञाने करणम् ।

प्रसक्तस्य प्रतिषेधेऽवशिष्टे बुद्धिः परिशेषः । स चापूर्ववस्तुसाधने करणम् ।

अनिश्चितवक्तृकः पारम्पर्यप्रवाद ऐतिह्यम् । तच्च कार्यसाधनोद्योगापरित्यागज्ञाने करणम् । शिष्टाचाराद्यष्टानां निर्व्यापारत्वम् ।

॥ इति श्रीकृष्णावधूतपण्डितकृते काव्यनवनीते
प्रमानिरूपणं नाम द्वितीयगोलकम् ॥

---

## ॥ अथ तृतीयगोलकम् ॥

## (काव्यप्रक्रियानिरूपणम्)

### *(काव्यलक्षणम्)*

कविसमयानुबद्धौ शब्दार्थौ काव्यम् । काव्यस्य शब्दार्थौ शरीरम् ।

कविसमयो जातिः । व्यङ्ग्यं जीवितम् । नायक आश्रयः । गुण-दोषवृत्तिरीतिप्रवृत्तिपाकशय्यालङ्कारा लोकवत्[16] । शब्दार्थौ निरूपितौ ।

*(कविसमयभेदकथनम्)*

कविसमयश्चतुर्विधः । सतोऽप्यनिबन्धनम् , असतोऽपि निबन्धनं, नियमेन निबन्धनं, विकल्पेन निबन्धनम्[17] इति । क्रमाद् यथा - मार्गे

---

16. 'शरीरं तस्य शब्दार्थौ जीवितं व्यङ्ग्यवैभवम्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥
शौर्यादय इव प्रोक्ताः श्लेषकान्त्यादयो गुणाः ।
आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥
शोभामाहार्यकीं प्राप्ता वृत्तयो वृत्तयो यथा ।
पदानुगुण्यविश्रान्तिः शय्या शय्येव सम्मता ॥
रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः ।
प्रख्याता लोकविदियं सामग्री काव्यसम्पदः ॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८७)

17. (कविसमयः-)
सतोऽपि चानिबन्धः स्यादसतोऽपि निबन्धनम् ।
नियमेन निबन्धश्च विकल्पेन निबन्धनम् ॥
एवं कवीनां समयश्चतुर्धा परिकीर्तितः ।
वस्तुनः सतोऽप्यनिबन्धनं यथा -
अयने चन्द्रिकासम्पत्पक्षयोः शुक्लकृष्णयोः ।
वसन्ते मालतीपुष्पं कामिदन्तेषु रक्तता ॥
फलपुष्पे चन्दने च फलं चाशोकपादपे ।
दिवा विकासः कुमुदे वर्षाकाले च मल्लिका ।
न वर्णयेत्सतोऽप्येतान् प्रबन्धेषु कदाचन ॥
अथासतो वस्तुनो निबन्धनं निरूप्यते -

हंसे कीर्तौ च शुभ्रत्वं दार्ढ्यं दुष्कीर्तिपापयोः ।
अञ्जलिग्राह्यता कुम्भपूर्यत्वं शशिदीधितेः ॥
रत्नानि यत्र तत्राऽदौ कमलानि नदीष्वपि ।
मन्दाकिन्यां जलेभादिहंसाः सर्वजलाशये ॥
ज्योत्स्नापत्नं चकोराणां प्रतापे रक्ततोष्णते ।
ध्वान्तस्य पुष्टिर्ग्राह्यत्वं लेपनं सूचिभेद्यता ॥
विश्लेषः कोकयो रात्र्यां रक्तत्वं क्रोधरागयोः ।
कान्तामध्येऽप्यदृश्यत्वं समुद्राणां चतुर्थता ॥
नियमेन निबन्धनं यथा -
बहुकालस्थितस्यापि शिवचन्द्रस्य बालता ।
मनुष्या मौलितो वर्ण्या देवाश्चरणतस्तथा ॥
भूर्जत्वग्हिमवत्येव मलयेष्वेव चन्दनम् ।
रक्तत्वं रत्नबन्धूकबिम्बाम्भोजविवस्वताम् ॥
कृष्णत्वं केशकामालिपिककाकपयोमुचाम् ।
सामान्यशौक्ल्यं छत्राम्भः पताकापुष्पवाससाम् ॥
वसन्त एव वर्ण्यं स्यात्परपुष्टस्य कूजितम् ।
वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णयेत् ॥
लज्जाकोपायशोनाशरोषाक्रन्दास्यकृष्णताः ।
रागपाण्डुरतादैन्यविषपानतपोजपाः ॥
दुःखद्वेषाभिचारेर्ष्यासहनोद्रीविकादयः ।
वर्णनीया जितस्यैते पराभवसमुद्भवाः ॥
विकल्पेन निबन्धनं यथा -
कृष्णत्वं हरितत्वं वा कमलासम्पदोर्मतम् ।
पीतत्वं रक्तता वाऽग्नौ परागे स्वर्णविद्युतोः ॥
दानवासुरदैत्यानामैक्यमेवातिसम्मतम् ।
कटाक्षे शौक्ल्यकृष्णत्वे लोध्रे लोहितपाटलौ ॥
चन्द्रे शशमृगौ कामध्वजे मकररोहितौ ।

चन्द्रिकादि, कीर्तौ शुभ्रत्वादि, मलये चन्दनादि, चन्द्रे शशो मृगो वेत्यादि ।

(व्यङ्ग्यार्थनिरूपणं तद्भेदकथनं च)

व्यङ्ग्यं नाम व्यञ्जनावृत्त्या गम्योऽर्थः । स द्विविधः । विवक्षितान्यपरवाच्यः, अविवक्षितवाच्यश्चेति । आद्योऽभिधामूलकः । स द्विविधः । संलक्ष्यक्रमव्यङ्ग्योऽसंलक्ष्यक्रमव्यङ्ग्यश्चेति । व्यञ्जकैर्व्यङ्ग्योत्पत्तिक्रमानुसरणे संलक्ष्यक्रमव्यङ्ग्यः । स द्विविधः । शब्दशक्तिमूलकः, अर्थशक्तिमूलकः, तदुभयशक्तिमूलकश्चेति । शब्दशक्तिमूलकव्यङ्ग्यत्वं श्लेष एव । क्वचिदलङ्कारस्य व्यङ्ग्यत्वं क्वचिद् वस्तुनः । उभयमपि पदवाक्यगतत्वेन द्विविधम् । अर्थशक्तिमूलकसंलक्ष्यक्रमव्यङ्ग्यस्तु चतुर्विधः । वस्तुना वस्तुनः, वस्तुनाऽलङ्कारस्य, अलङ्कारेणालङ्कारस्य, अलङ्कारेण वस्तुनश्चेति । वाच्यार्थविवक्षाया अभावेऽविवक्षितवाच्यो लक्षणामूलकः । स द्विविधः । अत्यन्ततिरस्कृतवाच्यः, अर्थान्तरसङ्क्रमितवाच्य इति । उभयमपि पदे वाक्ये च । असंलक्ष्यक्रमव्यङ्ग्योऽष्टविधः । रस-रसाभास-भाव-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलताभेदात्[18] । विभावादिक्रममनपेक्ष्य रसादेराशुतरबोधादसंलक्ष्यक्रमव्यङ्ग्यत्वम् ।

(नायकप्रकरणम्)

त्रिवर्गी नायकः[19] । स चतुर्विधः । धीरोदात्तो धीरशान्तो धीरोद्धतो

---

एवं कवीनां समयो दिङ्मात्रं परिकीर्तितः ॥

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१९३-१९५)

18. एतेषां लक्षणान्युदाहरणानि चानेनैव कविना स्वकृतौ काव्यलक्षणसङ्ग्रहाख्यायां विस्तारेण प्रादर्शिषत ।

19. (नायकः-)

सौन्दर्यौदार्यगाम्भीर्यमाधुर्यस्थैर्यशक्तयः ।

धीरललित[20] इति । स एव शृङ्गारनायकश्चतुर्विधः । अनुकूल-दक्षिण-

लोकानुरागमहिममहाभाग्यकुलीनताः ॥
तेजोवैदग्ध्यलालित्यवाग्मिताधर्मसङ्ग्रहाः ।
पण्डाविलासकरुणास्पर्धातारुण्यशुद्धयः ।
इति द्वाविंशतिर्नेतुर्गुणा अन्ये यथोचितम् ॥ (म.म.चम्पूःशुद्धबिन्दुः८.पृ-४)

20. (नायकभेदः-)
एतादृग्गुणगम्भीरस्त्रिवर्गी च धुरन्धरः ।
यशःप्रतापसुभगो नेता स्यात्स चतुर्विधः ॥
धीरपूर्वोदात्तशान्तललितोद्धतभेदतः ।
महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः ॥
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ।
तत्सत्त्वं तच्च गाम्भीर्यं तद्धैर्यं तादृशी कृपा ।
तत्तादृग्विनयत्यागः कृष्ण एव विराजते ॥
विनयो दक्षता त्यागो माधुर्यं प्रियवादिता ।
प्रज्ञा बुद्धिः कुलीनत्वं धर्मकामार्थकारिता ॥
स्मृतिर्धृतिर्दयोत्साहः कलाज्ञानं च चातुरी ।
इतीमेऽष्टादश गुणा धीरोदात्ते मनस्विनि ॥
धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः ।
प्रतिबोधयति व्यासो मुनीन् ब्रह्म सनातनम् ॥
सदाचारो विवेकश्च समता च दया तथा ।
महिमा सत्यवाक्यत्वं धीरशान्तगुणा मताः ॥
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ।
उग्रसेने प्रतिष्ठाप्य राज्यं स सुखमश्नुते ॥
गुणाः स्युर्धीरललिते यौवनं स्थूललक्ष्यता ।
प्रियंवदत्वं दाक्षिण्यं प्रियता च सुवेषता ॥
दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः ।
धीरोद्धतश्चण्डवृत्तिः सुलभक्रुद्धिकत्थनः ॥

धृष्ट-शठभेदात्[21] ।

---

कल्पाग्निसदृशक्रोधकुटिलभ्रुकुटीपटुः ।
दृप्तक्षत्रकुलारण्यं दग्धुमायाति भार्गवः ॥
शौर्यं तेजश्च चापल्यं साहसं च प्रतारणम् ।
मात्सर्योत्साहगर्वाश्च धीरोद्धतगुणा मताः ॥
कलावेदविशेषानुरक्तः शृङ्गारनायकः ।
चतुर्धा धृष्टानुकूलशठदक्षिणभेदतः ॥
अकापट्यं त्वितरयोर्वञ्चनं शठधृष्टयोः ।
व्यक्तगा अपि निर्भीतिर्धृष्टो वितथकत्थनः ॥ (म.म.चम्पूः-शुद्धबिन्दुः८पृ-७)

21. (अनुकूलः-)
एकस्यामेव कान्तायामनुकूलोऽनुरागवान् ॥
दृशाऽपि न स्पृशत्यन्यां रामस्तां जानकीं विना ॥

(शठः-)
नायिकामात्रविदितपुरुविप्रियकृच्छठः ॥
दृशैवालोकसे मां त्वं सन्निधत्से परां हृदि ॥

(दक्षिणः-)
अनेकास्वपि कान्तासु समात्मा दक्षिणः स्मृतः ।
समं स ववृते तासु तारास्विव निशाकरः ॥ (म.म.चम्पूःशुद्धबिन्दुः८-पृ-८)
नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ।
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ॥
सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः ।
महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ॥

(नायिकाप्रकरणम्)

21Aनायिका त्रिविधा । स्वीया परकीया सामान्या चेति ।

---

स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ।
दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः ॥
धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः ।
स दक्षिणः शठो धृष्टः पूर्वां प्रत्यन्यया हृतः ॥
दक्षिणोऽस्यां सहृदयः गूढविप्रियकृच्छठः ।
व्यक्ताङ्गवैकृतो धृष्टोऽनुकूलस्त्वेकनायकः ॥ (द.रू.प्रकाशः का-१-७-पृ-७३-८८)

21A. (नायिका-)
युवानुरञ्जनाकारचेष्टा शृङ्गारनायिका ।
वितनोति मुदं यूनां विलासैः सुन्दरीमणिः ।
स्वीया च परकीया च सामान्या चेति सा त्रिधा ॥ (म.म.चम्पूः-शु.विं.-८-पृ-७९)

(स्वीया-)
स्वामिन्येवानुरक्तात्मा सा स्वीया परिकीर्तिता ।
जानकी सेवते रामं वनेऽपि भवने तथा ॥ (म.म.चम्पूः-शु.बिं.-८-पृ-८०)

(परकीया-)
कन्यापरोढाभेदेन परकीयाऽपि च द्विधा ।

(सामान्या -)
सामान्या गणिकादिः स्यात् सैकैवं कथिता बुधैः ।
सामान्यापरिकीये द्वे प्रौढे इत्येव सम्मते ॥ (म.म.चम्पूः-शु.बिं.-८-पृ-८०)

(अन्यस्त्री-)
अन्यस्त्री कन्यकोढा च नान्योढाऽङ्गिरसे क्वचिद् ।
कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥
(द.रू.प्रकाशः-२-का-२०-२१-पृ-१०८)

(साधारणस्त्री-)
साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् ॥ (द.रू.प्रकाशः-२-का-२१-पृ-१०९)

परकीयासामान्ययोः रसाभास एव । स पञ्चविधः । यूनोरन्यतरमात्ररतिः, योषितो विजातीयेष्वनेकेषु पुरुषेषु वा, पुंसोऽनेकयोषित्सु, रतिवैषम्यं चेति । नव्यास्तु कन्यायाः क्षत्रियत्वे परकीयात्वं नास्ति, अन्यथा रत्नावल्यादे रसाभासतेति वदन्ति ।

*(गुणनिरूपणम्)*

जीवितमाश्रिता उत्कर्षहेतवो गुणाः[22] । ते च ओजो-माधुर्यादयस्त्रयोविंशतिः ।

*(वृत्तिनिरूपणम्)*

रसव्यञ्जको नेतृव्यापारो वृत्तिः[23] ।

---

22. (गुणाः-)

'ये रसस्याङ्गिनो धर्माः शौर्यादय इव स्थिताः ।
उत्कर्षहेतवस्ते स्यू रचनास्थितयो गुणाः ॥
ओजोमाधुर्यगाम्भीर्यप्रसादश्लेषविस्तराः ।
समता सौकुमार्यं च सौशब्द्यं भाविकं गतिः ॥
अर्थव्यक्तिरुदारत्वं सौक्ष्म्यं कान्तिरुदात्तता ।
प्रेयः प्रौढी रीतिरुक्तिः सम्मितत्वं तथैव च ।
समाध्यौर्जित्यसंक्षेपास्ते चतुर्विंशतिः स्मृताः ॥'

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७५)

23. (वृत्तिः-)

व्यापाररूपिणी वृत्ती रसावस्थानसूचिका ।
द्विधा शब्दार्थभेदेन सा द्वे अपि चतुर्विधे ॥
कैशिक्यारभटी चैव सात्वती भारतीति च ।
शब्दवृत्तिरिति प्रोक्ता शब्दव्यापाररूपिणी ।
अर्थवृत्तिरिति प्रोक्ता नेतृव्यापाररूपिणी ॥

(कैशिकी-)

अत्यर्थसुकुमारार्णसन्दर्भा कैशिकी मता।
ददर्श कान्ता सस्नेहं कान्तं कन्दर्पसुन्दरम्।
नृत्तगीतविलासादिमृदुशृङ्गारचेष्टितैः ॥
समन्विता भवेद्वृत्तिः कैशिकी श्लक्ष्णभूषणा।

(आरभटी-)

अत्युद्धतार्णसन्दर्भा वृत्तिरारभटी मता।
क्रुद्धः परश्वधच्छिन्नक्षत्रियोऽभ्येति भार्गवः ।
मायेन्द्रजालप्रचुरां चित्रयुद्धक्रियामयीम्।
छेद्यैर्भेदैः प्लुतैर्युक्तां वृत्तिमारभटीं विदुः ॥

(सात्वती-)

ईषत्प्रौढार्णसन्दर्भा सात्वती वृत्तिरिष्यते।
विसृज्य घोरं संसारं विहर त्वं हरौ मनः ।
हर्षप्रधाना संत्यक्तदोषभावा च सात्वती ॥

(भारती-)

ईषन्मृद्वर्णसन्दर्भा भारती वृत्तिरिष्यते।
को वेद बालः फा(लो भा)लाक्षचापमारोपयेदिति ॥
धीरोदात्तचरित्रात्मा धर्मशृङ्गारसंश्रया ।
शौर्यौदार्यगुणोपेता भारती वृत्तिरिष्यते ॥

(मध्यमारभटी-मध्यमकैशिकी च -)

मध्यमारभटी चैव तथा मध्यमकैशिकी।
मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा॥
जघान दानवान् क्रूरान् मांसशोणितभोजनान् ।
मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी।
तादृक्प्रिये कृतरुषं धिङ् मां धिङ् मम जीवितम्।
शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती।

(वृत्तिभेदकथनम्)

सा च कैशिकी आरभटी सात्वती भारती मध्यमकैशिकी मध्यमारभटी चेति षड्विधा ।

(रीतिलक्षणम्)

गुणालिङ्गितपदघटना रीतिः[24] ।

---

कैशिकीं सात्वतीं चैव केचिदारभटीमपि।
शब्दार्थवृत्तिं ब्रुवते भारतीं शब्दमात्रकाम् ।।
(म.म.चम्पूः-रम्यबिन्दुः-९-पृ-८८-९०)

24. (रीतिः-)
रीतिः प्रोक्ता गुणश्लिष्टपदसङ्घटना बुधैः ।
वैदर्भी लाटिका गौडी पाञ्चालीति चतुर्विधा ।।
(वैदर्भी रीतिः-)
बन्धा पारुष्यरहिता शब्दकाठिण्यवर्जिता।
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ।।
कुन्दचन्दनमन्दारैः समा चन्द्रांशसंश्रयैः ।
कीर्तिस्ते गोपकान्तानां सन्ततं कान्त राजते ।।
(लाटिका-)
शान्तार्णवहुला दीर्घसमासा लाटिका मता।
लसतां पदपद्मे ते राम राम सदा हृदि ।
(गौडी रीतिः-)
ओजःकान्तिगुणोपेता गौड़ी रीतिरितीर्यते।
एष दुर्वारदोर्वीर्यशर्वरीचरगर्वहा ।।
(पाञ्चाली-)
पाञ्चाली चापि वैदर्भीगौडीरीत्युभयात्मिका ।।
राजा विराजते सोऽयमर्थिसार्थेप्सितार्थदः ।।
(म.म.चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१०८)

*(रीतिभेदकथनम्)*

साऽपि वैदर्भी लाटी गौडी पाञ्चालीति चतुर्विधा ।

*(प्रवृत्तिभेदकथनम्)*

पौरस्त्या मागधी दाक्षिणात्या आवन्त्येति प्रवृत्तय[25]श्चतस्रः ।

---

25. (प्रवृत्तयः-)

प्रवर्तनं प्रवृत्तिः स्यादतिप्रेम्णार्जनादिषु ।
पौरस्त्या च तथाऽऽवन्त्या मागधी दाक्षिणात्यजा ॥
एवं चतुर्विधा प्रोक्ता प्रवृत्तिः सा तु कोविदैः ।

(पौरस्त्या-)

प्रवर्तनं स्यात्पौरस्त्या धर्मकीर्त्यार्जनादिषु ।
अस्थिरासारसंसारे धर्मकीर्तिर्द्वयं स्थिरम् ॥

(आवन्त्या-)

आवन्त्या तु प्रवृत्तिः स्यात्सदा निर्वाणकाङ्क्षया ।
सदाऽस्तु ते पदध्यानं किं मे स्वर्गसुखादिभिः ।

(मागधी-)

अर्थार्जनप्रवृत्तिस्तु प्रवृत्तिर्मागधी मता ।
क्षणाद् राज्यं हरिष्यामि निगृह्य रिपुसञ्चयम् ।

(दाक्षिणात्या-)

भोगार्जनप्रवृत्तिस्तु प्रवृत्तिर्दाक्षिणात्यजा ।
प्रियागमनवेलेयं शय्यां कल्पय दूतिके ॥

(म.म.चम्पूः-व्यङ्ग्यचबिन्दुः-१०-पृ-१०८)

(पाकलक्षणम्)

अर्थगम्भीरिमा पाकः[26] ।

(पाकभेदकथनम्)

स च द्राक्षानारिकेलाद्यनेकविधः ।

(शय्यालक्षणम्)

पदविनिमयानर्हत्वं शय्या[27] ।

---

26. (पाकः-)

**अर्थगम्भीरिमा पाकः स द्वेधा कविसम्मतः ।**
**द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ ॥**
**द्राक्षापाकः स कथितो वहिरन्तःस्फुरद्रसः ।**
अपाङ्गान् प्रेमवाराशितरङ्गान् किरति प्रिया ।
**स नारिकेलपाकः स्यादन्तर्गूढरसोदयः ॥**

यथा -

गाम्भीर्यातिशयेन यस्य जगतां नेत्राणि मानं गता
पत्रं यस्य नवीनतां भजति यत्पद्मेयमासीज्जगत् ।
राजत्केसरितं समुद्रममलं यद्वत्समव्यब्जगुः
शेते यो हि विभावरीशरुचिरः कुर्याच्छमभ्रं शिवः ॥
मधुक्षीरादिपाकान्यप्येवमूह्यानि सूरिभिः ॥

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८२)

27. (शय्या-)

**सा शय्या कीर्तिता मैत्री या पदानां परस्परम् ।**
**दाता जेता रणे त्राता भीतानां भाति भूपतिः ॥**

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१८२)

*(अलङ्कारलक्षणम्)*

शब्दार्थयोः शोभामाधाय व्यङ्ग्यमुपस्करोत्यात्मानं देहस्थहारादिरिवालङ्कारः[28] ।

*(अलङ्कारविभागः)*

स द्विविधः । शब्दालङ्कारोऽर्थालङ्कारश्चेति । उभयेऽप्यनेकविधाः ।

अत्रोक्तानां भेदनिरूपणं मत्कृतेऽलङ्कारसूत्रभाष्ये चमत्कारचामीकरे[29] च द्रष्टव्यम् ।

॥ इति श्रीकृष्णावधूतपण्डितकृते काव्यनवनीते प्रक्रियानिरूपणं नाम तृतीयगोलकम् ॥

---

28. (अलङ्कारः-)

**अलङ्करोति शब्दार्थावित्यलङ्कार इष्यते ।**
**द्विधा शब्दार्थभेदेन ...............॥**

29. (शब्दालङ्काराः-)

**.....शब्दालङ्कृतयस्तु षट् ।**
**छेको वृत्तिस्तथा लाटोऽनुप्रासपदपूर्वगाः ।**
**पुनरुक्तवदाभासो यमकं चित्रमित्यपि ॥**

(अर्थालङ्काराः-)

**उपमाऽनन्वयो भ्रान्तिः प्रतीपं रूपकं स्मृतिः ।**
**उपमेयोपमोल्लेखः परिणामस्त्वपह्नुतिः ॥**
**उत्प्रेक्षातिशयोक्तिश्च सन्देहस्तुल्ययोगिता ।**
**प्रतिवस्तूपमा चैव दीपकावृत्तिदीपके ॥**
**दृष्टान्तो व्यतिरेकश्च सहोक्तिश्च निदर्शना ।**
**विनोक्तिश्च समासोक्तिः श्लेषः परिकराङ्कुरः ॥**
**अप्रस्तुतप्रशंसा च पर्यायोक्तं परीकरः ।**
**व्याजस्तुतिर्व्याजनिन्दाऽथाऽऽक्षेपः प्रस्तुताङ्कुरः ॥**

विराधाभासविषमे विशेषोक्तिरसम्भवः।
विभावना सङ्गतिश्च विचित्रमधिकं समम्॥
व्याघातोऽल्पं विशेषश्चान्योन्यं कारणमालिका।
एकावली यथासंख्यं मालादीपकमप्युत॥
पर्यायः परिवृत्तिश्च परिसंख्या समुच्चयः।
विकल्पश्च समाधिश्च सारः कारकदीपकम्।
काव्यार्थापत्तिरुल्लासः प्रत्यनीकं विकस्वरः॥
मिथ्याध्यवसितिः काव्यलिङ्गं सम्भावना तथा।
अवज्ञाऽर्थान्तरन्यासः प्रौढोक्तिर्ललितं तथा॥
अनुज्ञोदात्तलेशौ च प्रहर्षणविषादने।
मुद्रा रत्नावली पूर्वरूपं तद्गुणमीलिते॥
अतद्गुणश्चानुगुणः सामान्यं पिहितं यथा।
उन्मीलितोत्तरे सूक्ष्मं विशेषो भाविकं तथा॥
व्याजोक्तिर्विवृतोक्तिश्च गूढोक्तिर्युक्तिरेव च।
छेकोक्तिश्चैव लोकोक्तिः स्वभावोक्तिस्ततः परम्॥
वक्रोक्तिश्च तथा चित्रं प्रतिषेधो विधिस्तथा।
निरुक्तिर्हेतुरित्येवमलङ्कारशतं मतम्॥
रसवान् प्रेय ऊर्जस्वित्समाहितमतः परम्।
भावोदयो भावसन्धिर्भावशाबल्यमप्यथ॥
प्रत्यक्षमनुमानं चोपमानं शब्द एव च।
अर्थापत्तिरनुपलब्धिरैतिह्यं सम्भवस्तथा॥
इत्थं पुनः पञ्चदशालङ्काराः कथिता बुधैः।
संसृष्टिः सङ्करश्चेति द्विधोक्तानां च मेलने।
इत्थं मिलित्वाऽलङ्काराः शतं सप्तदशोत्तरम्॥

(म.म. चम्पूः-व्यङ्ग्यबिन्दुः-१०-पृ-१०९-१११)

॥ अथ चतुर्थगोलकम् ॥

*(काव्यदोषप्रकरणे काव्यदोषलक्षणम्)*

काव्यापकर्षहेतुर्दोषः । अपकर्षो नाम सहृदयानानन्दः ।

'एकोऽपि दोषो यद्यस्ति काव्यसम्पन्न शोभते ।
सौन्दर्यशीलसम्पन्ना स्वित्रिणी तरुणी यथा ॥' इत्युक्तेः ॥

*(काव्यदोषभेदकथनम्)*

स त्रिविधः । शब्ददोषोऽर्थदोषो रसदोषश्चेति ।

*(पददोषभेदकथनम्)*

श्रुतिकटुत्वं, भ्रष्टसंस्कारत्वम्, अप्रयुक्तत्वम्, असमर्थत्वं, निहतार्थत्वं, निरर्थकत्वं, सन्दिग्धत्वम्, अवाचकत्वम् अश्लीलत्वं, ग्राम्यत्वम्, अप्रतीतत्वं, गूढार्थत्वं, नेयार्थत्वं, क्लिष्टत्वम्, अविधेयत्वम्, अप्रयोजकत्वं, विरुद्धमतिकृत्त्वं, च्युतसंस्कारत्वं, चेत्यष्टादश पददोषाः[30] ।

---

30. (पददोषाः-)

रसापकर्षहेतुत्वं दोषत्वं परिकीर्तितम् ।
स दोषः शब्दगत्वेनार्थगत्वेन च द्विधा ॥
शब्दोषो द्विधा प्रोक्तः पदवाक्यविभेदतः ।
तत्र श्रुतिकटुभ्रष्टसंस्कारं चाप्रयुक्तकम् ॥
असमर्थं च निहतानुचितार्थे निरर्थकम् ।
अवाचकं तथाऽश्लीलं सन्दिग्धं चाप्रतीतकम् ॥
ग्राम्यगूढार्थनेयार्थान्यथ क्लिष्टप्रयोजके ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् तथा ॥
एवं च पददोषाः स्युर्बुधैरष्टादशोदिताः ।
तत्र श्रुतिकटु ज्ञेयं माधुर्याव्यञ्जकं पदम् ॥
न ते त्वद्दयिते किं वा नैष्ठुर्यमवलम्बते ।

यद्व्याकरणदुष्टं तद्भ्रष्टसंस्कारमुच्यते।
रथ्यया सञ्चरन्तं त्वां दृष्ट्वा विरमते वधूः ॥
अप्रयुक्तं यदाम्नातमपि पूर्वैरनादृतम्॥
विहायाः परितो भाति तारैः स्मरयशोऽङ्कितैः ।
असमर्थमशक्तं यदुपसन्धानमन्तरा।
विधाय त्वद्यशः सृष्टः शिष्टो धात्रा शशिच्छलात् ॥
योगमात्रमयुक्तं चाप्यसमर्थमितीष्यते॥
चतुरम्बुधराक्रान्तां भुनक्ति धरणीं नृपः ।
निहतार्थं द्वितीयार्थे ह्यप्रसिद्धे प्रयुज्यते।
सतां क्षयकरो राजा राजते विधुवत्सदा ॥
प्रस्तुतार्थविरुद्धार्थं भवेदनुचितार्थकम्॥
अनुनीय मुहुर्दूतीं प्रेषयामास मानिनी।
विदग्धहृदया कामशरवर्षणतेजसा ॥
पादपूरणमात्रार्थमव्ययादि निरर्थकम्।
देवं कुण्ठितकालं वै नमामि च सुरेश्वरम् ।
अवाचकं तु तात्पर्याविषयार्थप्रतीतिकृत्॥
लुब्धका विहरन्ति त्वद्रिपुस्त्रीसञ्चयं वने ॥
व्रीडा जुगुप्सामाङ्गल्यव्यक्तीरश्लीलता मता।
उपस्थास्यत्युत्सवं ते देवोऽभिप्रेतमादरात् ।
सन्दिग्धं तत्तु कथितं यदनिर्धारितार्थकम्॥
तमः परिहरेत्सोमः सर्वापेक्षितविग्रहः ॥
शास्त्रान्तरैकसिद्धार्थमप्रतीतमुदाहृतम्।
सन्तः कुर्वन्ति कर्माणि नियोगफलनिःस्पृहाः ।
पामरव्यवहारैकप्रसिद्धं ग्राम्यमिष्यते॥
स(क)धां कुर्वन्मिषात् तस्या गल्लयुग्मं चुचुम्ब सः ॥
गूढार्थमप्रसिद्धार्थे प्रयुक्तं पदमिष्यते।
ललाटे कुरुते कान्ता रुधिरं वीक्ष्य दर्पणम् ।

(वाक्यदोषभेदकथनम्)

शब्दभ्रष्टं, प्रयोगभ्रष्टं, वृत्तभ्रष्टम् , उपमाभ्रष्टं, यतिभ्रष्टं, छन्दोभ्रष्टम्, असंष्ठुलम्, अनुक्तवाच्यत्वं, समाप्तपुनरात्तम्, सङ्कीर्णम्, अपूर्णम्, अविधेयं, वाक्यगर्भितम्, अर्थान्तरस्थैकपदं, विसन्धि, कुसन्धि, कटुसन्धि, अश्लीलसन्धि, पुनरुक्तम्, अशरीरम्, अधिकपदम्, प्रसिद्धिविधुरम्, अपसमासम् ,अपदम् , अमतविसर्गं, भग्नप्रक्रमं, गर्हितम्, अभवन्मतयोगम्, अरीति, अमतपरार्थं, ग्राम्यं, पतत्प्रकर्षमिति दुष्टवाक्यानि त्रयस्त्रिंशत् ।

---

नेयार्थं स्याल्लाक्षणिकमशक्तं फलबोधने ॥
दृशाऽपि नैव स्पृशति वाचा शोच्या रसं तव ॥
स्वसंकेते प्रयुक्तं चाप्यर्थे नेयार्थमिष्यते ।
धत्ते तव रिपुस्त्रैणं नवं कवचमाकुलम् ।
क्लिष्टं भवेत्तद्यत्रार्थप्रतिपत्तिर्विवक्षिता ॥
दशास्यजजितोद्भूतरिपुस्त्रीजननीपतिः ॥
तदप्रयोजकं यत्स्यादविशेषविधायकम् ।
वसामि पर्वते भूमौ स्थिते तृणशिलायुते ।
अविमृष्टविधेयांशं चेद्विधेयाप्रधानता ॥
शूरगर्हितकीर्तिः स पलायनपरोऽभवत् ॥
सर्वं कषसि गर्वं त्वं न केषां युधि रक्षसाम् ।
भवेद्विरुद्धमतिकृद्विपरीतार्थबोधकम् ।
नित्यं धर्माहितमतिः सोऽयं परमशोभनः ॥
अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
दोषाः श्रुतिकटुत्वाद्याः सर्वे वाक्येऽप्यमी मताः ॥
अर्हन्ति बर्हिणां बर्हगर्हां तन्मूर्धजा मुहुः ॥

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१६६-१६८)

(अर्थदोषभेदकथनम्)

अपुष्टः, कष्टः, अमार्गः, व्याघातः, अमतः, अप्रयुक्तः, अलङ्काराभासः, पुनरुक्तः, अधिकोपमः, हीनोपमः, असदुपमः, असमोपमः, अपार्थः, दुष्क्रमः, ग्राम्यः, सन्दिग्धः, नियमच्च्युतः, साकाङ्क्षः, परुषः, अश्लीलः, अनिरूप्यः, व्यर्थः, भिन्नः, अतिमात्रः, निर्हेतुः, अनवीकृतः, सहचरच्युतः, विरुद्ध इत्यष्टाविंशतिर्दुष्टार्थाः ।

(रसदोषभेदकथनम्)

रसस्थायिसञ्चारिणां शब्दवाच्यत्वं, विभावानुभावयोः कष्टाद् व्यक्तिः, प्रतिकूलविभावज्ञानं, पुनः पुनर्दीप्तिः, अकाण्डप्रथनं, रसच्छेदः, अङ्गविस्तारः, अङ्गिनोऽननुसन्धानं, विरुद्धरसानामङ्गाङ्गिभावेन देशकालसामानाधिकरण्यं, प्रकृतिविपर्ययः, अनङ्गाभिधानं चेति रसदोषाः पञ्चदश ।

एतेषां लक्षणोदाहरणानि मत्कृते काव्यमन्दारमरन्दे[31] अलङ्कार-सूत्रभाष्ये च स्पष्टानि ।

दुस्सहो मत्सरो वह्निर्यं पुरोभागिनं श्रितः ।
प्रकाशयति तस्मै स्वं गुणं द्रागाश्रयस्थितम् ॥ १५ ॥

॥ इति श्रीकृष्णावधूतपण्डितकृते काव्यनवनीते
काव्यदोषनिरूपणं नाम चतुर्थगोलकम् ॥

31. वाक्यदोषाणाम्, अर्थदोषाणां, रसदोषाणां च लक्षणोदाहरणानि मन्दार-मरन्दचम्पूकाव्यतः सङ्गृह्य ४ परिशिष्टे दत्तानि ।

## ॥ अथ पञ्चमगोलकम् ॥

### *(काव्यभेदकथनम्)*

काव्यं द्विविधम् । महाकाव्यमुपकाव्यमिति । नगरार्णवादिवर्णने आद्यम् । प्रकृतमात्रवर्णने द्वितीयम् । पुनस्त्रिविधम् । ध्वनिः, गुणीभूतव्यङ्ग्यं, चित्रमिति । ध्वन्यादिनिरूपणं मत्कृते काव्यलक्षणसङ्ग्रहे बोध्यम् ।

### *(उत्तमादिकाव्यभेदकथनम्)*

पुनस्त्रिविधम् । उत्तममध्यमाधमभेदात् । रसस्याभिमुखत्वे उत्तमम् । परमुखत्वे मध्यमम् । विमुखत्वे अधमम् ।

### *(गद्यपद्यादिरूपकाव्यभेदकथनम्)*

गद्यपद्योभयमयत्वात् पुनस्त्रिविधम् । पुनर्द्विविधम् । दृश्यं श्राव्यं चेति ।

### *(दृश्यकाव्यभेदकथनम्)*

तद् दृश्यं द्विविधम् । रूपकमुपरूपकं चेति । रूपकाणि दश । नाटकं, प्रकरणं, भाणः, प्रहसनं, डिमः, व्यायोगः,समवाकारः, वीथी, अङ्कः, ईहामृगश्चेति । उपरूपकाव्यष्टौ । नाटिका-प्रकरणी-भाणी-डोम्बी श्रीगदित-प्रस्थान-रासका-ईहामृगीभेदात् । ईहामृगीलक्ष्यं मत्कृतमधुकरचरितं नाम गर्भरूपकं द्रष्टव्यम् । रूपकभेदकाः रसेतिवृत्तनेतारः । एतल्लक्षणोदाहरणानि मत्कृते चमत्कारचामीकरे स्फुटानि[32] ।

---

32. *(रूपकाणि, उपरूपकाणि च-)*

**सूत्रम् - नाटकप्रकरणभाणप्रहसनडिमव्यायोगसमवकारवीथ्यङ्केहामृगाः, नाटिकाप्रकरणिकाभाणी डोम्बिकाश्रीगदितप्रस्थानरासकेहामृग्यो दृश्यम् ॥ ६ ॥**

नाटकादि दश महाकाव्यं, नाटिकादि अष्टोपकाव्यं नाटकाभिनयेन चक्षुर्ग्राह्य-

त्वाद् दृश्यम्।

**सूत्रम् - नटे नेत्रारोपाद्रूपकम्॥ ७॥**

दृश्यकाव्यं रूपकमित्युच्यते आरोपप्राधान्यात्। यथा मुखादौ चन्द्रादेरारोपे रूपकम्। दृश्यं महाकाव्यं नाटकादिभेदेन दशविधम्। दृश्यमुपकाव्यं नाटिकादिभेदेनाष्टविधम्। नाटकं शाकुन्तलादि। प्रकरणं मृच्छकटिकादि। भाणो वसन्ततिलकादिः। प्रहसनं वक्रनासिकादि। डिमः त्रिपुरविजयादिः। व्यायोगः धनञ्जयविजयादिः। समवकारः हनुमद्विजयादिः। वीथी राधाविलासादिः। अङ्को मधुकर्षणचरितादिः। ईहामृगः सुन्दाख्यानादिः। नाटिका रत्नावल्यादिः। प्रकरणी कर्पूरमञ्जर्यादिः। भाणी कुलटालीलादिः। डोम्बी भामाविभ्रमादिः। श्रीगदितं गणिकानन्दादि। प्रस्थानं विधवामण्डनादि। रासकं गोपीबिम्बोकादि। ईहामृगी प्रत्यक्षानुवादिनीति।

**सूत्रम् - अथ किं रूपकभेदकं? रसेतिवृत्तनेतारः॥ ८॥**

रूपकाणां परस्परभेदबुद्धिजनकलक्षणं किमिति प्रश्नः। रसेतिवृत्तनेतार इत्युत्तरम्। रसादीनामन्यतमे वैलक्षण्याद्रूपके वैलक्षण्यम्। रसाः शृङ्गारादयः पूर्वमुक्ताः। नायकनिरूपणं तृतीये। इतिवृत्तं कथावस्तु, चरितमिति पर्यायः।

तथा च नाटके शृङ्गारो वीरो वा प्रधानम्। अन्येऽङ्गानि। निर्वहणे अद्भुतः। ख्यातं वा कल्प्यं वा मिश्रं वा वस्तु। दिव्यो वा मर्त्यो वा धीरोदात्तो नेता। स्वीया नेत्री। पात्राण्यनेकानि। पञ्चापि सन्धयः। पञ्चादिदशान्ता अङ्काः।

प्रकरणे शृङ्गारः प्रधानम्। विप्रो वा वैश्यो वा मन्त्री वा नेता धीरशान्तः। स्वीया वा वेश्या वा द्वयं वा नेत्री। कल्प्यं वस्तु। शिष्टं नाटकवत्।

भाणे शृङ्गारवीरयोर्वा भासः। विटो नेता। परकीया वा सामान्या वा तद्द्वयं वा नेत्री। कल्प्यमितिवृत्तम्। मुखनिर्वहणे। एकपात्रम्। एकोऽङ्कः। आकाशभाषणम्। भारतीवृत्तिप्रधानम्।

प्रहसने हास्यः प्रधानम्। पात्राण्यनेकानि। शुद्धं वा मिश्रं वा कल्प्यमितिवृत्तम्। मुखनिर्वहणे। सामान्या वा विधवा वा नेत्री। यतिर्विटो वा नेता। अङ्क एकः। भूयोभारती।

डिमे वीरभयानकरौद्रबीभत्सकरुणाद्भुताः प्रधानानि। अन्यावङ्गे। देवगन्धर्वयक्षराक्षस-मानवदानवदैत्यभूतप्रेतपिशाचोरगविद्याधरकिन्नरगुह्यकतिर्यक्सिद्धाः षोडश नेतारः।

नायिका वर्ज्या । अर्थार्थं युद्धमवधम् । वृत्तयः कै(कौ)शिकीवर्ज्याः । ख्यातं वस्तु । चत्वारोऽङ्काः । निर्विमर्शाः सन्धयः ।

व्यायोगे धीरोद्धतो नेता । एकस्य बहुभिरस्त्रीहेतुकं युद्धं सवधम् । एकाहचरितम् । एकोऽङ्कः । विमर्शगर्भरहिताः सन्धयः । वीरः प्रधानम् । कल्प्यं ख्यातं वा वस्तु ।

समवकारे वीरः प्रधानम् । देवादिद्वादश नेतारः । तत्र कपिर्मत्स्यो वैकः । त्रयोऽङ्काः । स्वल्पा निर्विमर्शाः सन्धयः । सवधमर्थार्थं युद्धम् । न नेत्री ।

वीथ्यां शृङ्गारः प्रधानम् । दक्षिणो नेता । अनेका नेत्र्यः । कैशिकी । एकपात्रं पात्रद्वयं वा । आकाशभाषणम् । कल्प्यं ख्यातं वा वस्तु । मुखनिर्वहणे ।

उत्सृष्टाङ्के करुणः प्रधानम् । नेता मर्त्यः । वस्तु ख्यातं । परकीया सामान्या वा नेत्री । मुखनिर्वहणे ।

एकपात्रम् । एकोऽङ्कः । आकाशभाषणम् । भारती ।

ईहामृगे मिश्रं वृत्तम् । मर्त्यदिव्यौ नायकप्रतिनायकौ । शृङ्गाराभासः । अकामुकीं स्त्रियमुद्दिश्य अवधं युद्धम् । सन्धित्रयं प्रथमं, चत्वारोऽङ्काः ।

नाटिकायां ख्यातं कल्प्यं मिश्रं वा इतिवृत्तम् । नेता धीरोदात्तो विदूषकश्चेति द्वे पुरुष-पात्रे । अन्यानि बहूनि स्त्रीपात्राणि, शृङ्गारः प्रधानं । कैशिकी । शिष्टं नाटकवत् ।

प्रकरण्यां धीरशान्तो विप्रोऽमात्यो वा नेता । कल्प्यं वस्तु । प्राकृतम् । शिष्टं पूर्ववत् ।

भाण्यां कुलटा वेश्या वा एका नेत्री, बहवो विटाः । एकं स्त्रीपात्रम् । शिष्टं भाणवत् । संस्कृतमेव ।

डोम्ब्यां देशीयभाषा, एकं पुरुषपात्रं, कल्प्यं वस्तु, शृङ्गारवीरयोराभासः, एकोऽङ्कः, मुखनिर्वहणे, अन्यानि नीचानि स्त्रीपात्राणि ।

श्रीगदिते वेश्यापात्रद्वयम् । धनिको नेता । शृङ्गाराभासः । कल्प्यं वस्तु । एकोऽङ्कः । संस्कृतम् ।

प्रस्थाने हास्यः प्रधानम् । विधवा नेत्री, संन्यासी नेता । पौराणिको वा । संस्कृतम् । एकोऽङ्कः । अनेकपात्राणि ।

रासके कल्प्यं ख्यातं मिश्रं वा वस्तु । शृङ्गाराभासः । विटो नेता । एकं पुरुषपात्रं । दशाधिकानि स्त्रीपात्राणि । मध्यमा नायिकाः जारिण्यः । निर्लज्जमेव रात्रिचरितम् । एकोऽङ्कः । संस्कृतम् ।

(श्राव्यकाव्यभेदकथनम्)

श्राव्यं तु सर्गकाव्यचम्प्वादि । असत्काव्यं त्याज्यम् । असत्त्वं च कर्तृनेतृप्रयोगहीनत्वेभ्यः । सत्काव्यं ग्राह्यम् । सत्त्वं च साधुभिः कर्तृनेतृप्रयोगैः ।

(काव्यप्रयोजनम्)

काव्यं शुभयशोऽर्थेभ्यः कान्तावदुपदेशकृत् ।
कर्तृनेतृप्रतिष्ठायै परानन्दाय मुक्तये ॥ १६ ॥

(ग्रन्थसमाप्तिः)

काव्यालङ्कारसारस्य सूत्रकारानुसारिणा ।
कृतं कृष्णावधूतेन दिङ्मात्रस्य प्रदर्शनम् ॥ १७ ॥

॥ इति श्रीकृष्णावधूतपण्डितकृते काव्यनवनीते
फलनिरूपणं नाम पञ्चमं गोलकम् ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

ईहामृग्यां करुणः प्रधानम् । शृङ्गाराभासोऽधिकः । मर्त्यो नायकः । तत्पत्नी जारिणी नायिका । जारः प्रतिनायकः । देशाटनवध्यवधोद्योगौ । नेत्रीनायकयोर्द्वेषः । पूर्वनायिकात्यागः । अन्यनायिकाग्रहणम् । गृहदासवद् बद्धसारमेयवत् षण्डबलीवर्दवद् भिक्षुकहस्तगमर्कटवदधीनजीवनं नायकस्य । अतो वैराग्येण सर्वत्यागः । यथायोगं सन्धयः । संस्कृतं तत्तद्देशीयपामरभाषा च - इति रूपकाणां वैलक्षण्यं बोध्यम् । (चमत्कारचामीकरम् -अध्याय-५-सू-६,७,८)

# परिशिष्टम् - १

## ॥ काव्यलक्षणसङ्ग्रहस्य कारिकार्धाकाराद्यनुक्रमणिका ॥

# परिशिष्टम् - २

## काव्यलक्षणसङ्ग्रहोदाहरणश्लोकसूचिका

# परिशिष्टम् - ३

## काव्यनवनीतश्लोकसूचिका

| श्लोकादिः | श्लोकसङ्ख्या |
|---|---|
| अस्तङ्गतोऽद्य सविता | १४ |
| इन्दीवरदलाच्चित्रम् | ७ |
| एकोऽपि दोषो यद्यस्ति (प्राचीनम्) | चतुर्थगोलकम् |
| कचभारात् कुचभारः | ८ |
| काव्यं शुभयशोऽर्थेभ्यः | १६ |
| काव्यालङ्कारसारस्य | १७ |
| गोपीभिर्नयनं देहि | ९ |
| तस्या एव त्वया सोऽहम् | ५ |
| त्वदपाङ्गतरङ्गेभ्यः | ४ |
| दुःसहो मत्सरो वह्निः | १५ |
| प्रयोजनाविशिष्टस्य (प्राचीनम्) | द्वितीयगोलकम् |
| प्रवीणेयं मनो हन्तुम् | १ |
| प्रातश्चेन्नाथ ! को दोषः | ११ |
| मल्लीलाभोपेतः | १२ |
| मुखेन्दुर्नयनानन्दः | ६ |
| वक्तृबोद्धव्यकाकूनाम् | १३ |
| वीक्ष्यानुद्रवतःकुन्तान् | ३ |
| साक्षी मुकुन्दकेलीनाम् | २ |
| सामोदसुमनोजात | १० |

# परिशिष्टम् - ४

## (वाक्यदोषाः)

शब्दहीनं क्रमभ्रष्टं हतवृत्तं हतोपमम् ।
यतिभङ्गोऽनुक्तवाच्यं समाप्तपुनरात्तकम् ॥
भग्नछन्दश्च सङ्कीर्णमपूर्णं वाक्यगर्भितम् ।
अर्थान्तरस्थैकपदं विसन्धिपुनरुक्तिमत् ॥
अशरीराधिकपदप्रसिद्धिविधुराणि च ।
अपदस्थसमासं च तथा मतविसर्गकम् ॥
अपदस्थपदं भग्नप्रक्रमं गर्हितं तथा ।
अभवन्मतयोगं चावर्णामतपदार्थके ॥
पतत्प्रकर्षमित्येवं वाक्यदोषा रसभ्रुवः ।
शब्दशास्त्रहतं वाक्यं शब्दहीनमितीर्यते ॥
सम्पश्यते मुखं तस्याः साकूतं पल्लवाग्रणीः ।
क्रमभ्रष्टं भवेद्वाक्यं यत्र शब्दस्य विक्रमः ।
यशःप्रतापयोर्मग्नौ सूर्याचन्द्रमसौ तव ॥
हतवृत्तं भवेद्यत्र वृत्तं रसविरोधि तत् ॥
वल्गत्खड्गे न तेन द्राक्खण्डिताः खण्डशो द्विषः ।
असंमतोपमा यत्र कवीनां तद्धतोपमम् ।
तद्भिन्नलिङ्गवचनाधिकन्यूनोपमात्मना ॥
चतुर्धा कथितस्तेषां लक्षणोदाहृती ब्रुवे ।
भिन्नलिङ्गं भवेद्यत्रोपमा स्याद्भिन्नलिङ्गका ॥
गिरिणेव कुचस्थल्या राजते मानिनीमणिः ॥
तद्भिन्नवचनं भिन्नवचना यत्र चोपमा ।
मल्लिका इव कान्ताया मन्दहासो विराजते ।
यत्रोपमानमधिकं तद्भवेदधिकोपमम् ॥

कामिन्या वदनं भाति पद्मबिम्बमिव श्रिया ॥
न्यूनं यत्रोपमानं स्यात्तन्न्यूनोपममिष्यते ।
यथा रेजे श्रिया विष्णुस्तथा राट् स्वश्रिया भुवा ।
यत्र स्थाने न विच्छेदो यतिभ्रष्टं तदिष्यते ॥
अनन्यललनासामान्येयं साध्वी विराजते ॥
अनुक्तवाच्यं वक्तव्यानभिधायिपदोक्तितः ।
शौरेः पद्मानुरक्तस्य तथाऽप्येषा मनोहरा ।
मुख्यक्रियान्वये जाते पुनः किञ्चिद्विशेषणम् ॥
यत्रोपादीयते तत्तु समाप्तपुनरात्तकम् ।
स्मरजैत्रपताकेयं जयत्यखिलरञ्जनी ॥
छन्दोभग्नं वचो यत्र भग्नच्छन्दस्तदिष्यते ।
मुहुरालिङ्गति प्राणप्रियं कन्दर्पसदृशम् ।
संङ्कीर्णमन्यवाक्ये चेदन्यवाक्यपदं समम् ॥
चित्त मुञ्चाक्षयं भोगं शिवं क्षणिकमाश्रय ॥
अपेक्षितपदानुक्तिर्यत्रापूर्णं तदिष्यते ।
किं तपश्चरितं शेते तत्कुचाभ्यन्तरं मुहुः ।
इदमेव न्यूनपदाभिधं सम्बन्धवर्जितम् ॥
तद्वाक्यगर्भितं यस्य मध्ये वाक्यान्तरं यदि ।
बुद्ध्वाऽपि साध्वीं तां कान्तां खलानां बुद्धिरीदृशी ॥
निर्मिता विधिना सोऽयं साहसं सङ्गमेऽकरोत् ।
एकार्थकपदं चान्यार्थकवाक्यान्तरे यदि ।
अर्थान्तरस्थैकपदं नाम तत्स्यात् प्रवेशनम् ॥
कौस्तुभालङ्कृतं वक्षः कैटभारेः कपर्दिनः ॥
चूडालो बालचन्द्रेण जटाजूटश्च पातु नः ।

असम्मतः कवीनां च यत्र सन्धिर्विसन्धि तत् ।
विसंहिताश्लीलकटुभेदेन त्रिविधं हि तत् ॥
शब्दशास्त्रहतः सन्धिः संहितायां विसंहितम् ।
भाति इन्दुरिवैतस्या मुखमेणीदृशोऽधुना ॥
व्रीडाजुगुप्साकार्यर्थामङ्गलार्थप्रतीतिकृत् ॥
विसन्ध्यश्लीलाह्वयं च त्रिविधं परिकीर्तितम् ।
यो निर्दुःखं सुखं भेजे राज्ये तस्याधुनाऽभवत् ।
वपुरीषद्गलद्वारि भयाद्धप्रे तव द्विषः ॥
सन्धौ श्रुतिकटुत्वं चेद्भवेत्कटुविसन्धि तत् ॥
असिपुत्र्यलिरुग्धन्त द्रोग्धुरस्य पतद्धटात् ।
शब्दार्थपौनरुक्त्ये तु पुनरुक्तिमदिष्यते ।
विन्ध्ये काननसङ्कीर्णे वयं काननवृत्तयः ॥
क्रियापदेन रहितमशरीरमितीर्यते ॥
तादृशीं कामिनीं मां च तादृशं नृपतिं विधे ।
इदमेवानन्वयाख्यं दूषणं परिकीर्तितम् ।
अवक्तव्यार्थबोधः स्याद्यत्राधिकपदं हि तत् ॥
नीलोत्पलदलाकारसदृशं तव लोचनम् ॥
कविप्रसिद्ध्यतिक्रान्तं प्रसिद्धिविधुरं मतम् ।
भुवनान्युपकाराणां श्रेणिभिः प्रीणयन्ति ते ।
अपदस्थसमासं स्यादस्थाने चेत्समस्यते ॥
धनूंषि नमयन्त्येते न शिरांसीत्यरीन् प्रति ॥
सद्यःसमुद्यत्क्रोधोच्चैर्बद्धभ्रूकुटिरास सः ।
यत्रामतविसर्गं तद्विसर्गाः कव्यसम्मताः ।
तद्विसर्गोत्तरं नष्टं स्फुटं लुप्तमिति त्रिधा ॥

ओत्वप्राप्तौ विसर्गाणां ज्ञेयं नष्टविसर्गकम् ।
भवतो विमतो भीतो यातो दारयुतो वनम् ॥
यत्र स्फुटा विसर्गाः स्युस्तत्स्यात्स्फुटविसर्गकम् ।
अहितः सहितः सैन्यैः परितः क्षपितस्त्वया ।
विसर्गा यत्र लुप्ताः स्युस्तत् स्याल्लुप्तविसर्गकम् ॥
विनता रक्षिता राज्ञा निहता विमता रणे ॥
अपदस्थपदं तत्स्याद्यत्रास्थाने पदं भवेत् ।
वसुन्धरायामेव त्वं धरानाथ धनुर्धरः ।
प्रक्रान्तशैलीत्यागे तु भग्नप्रक्रममिष्यते ॥
गुहा गृहा मही शय्या वैष्णवा बान्धवा मम ॥
गर्हितं यदि वाक्यार्थे वाक्यान्तरनिवेशनम् ।
चित्त श्रेयस्करं मुञ्च भज तृष्णां सदाशिवम् ।
इदमेव भवेद्वाक्यसङ्कीर्णाभिधदूषणम् ॥
अभवन्मतयोगं स्यादिष्टान्वयमतिर्न चेत् ।
यैर्ध्यातस्त्वं ये स्तुवन्ति जनास्त्वामीश पासि तान् ॥
अवर्ण नाम कथितं रसाननुगुणं वचः ।
ज्ञानध्वस्तसमस्तोऽहं ब्रह्म साक्षात्क्रिये कदा ।
इदमेवारीति नाम प्रतिकूलाक्षरं तथा ॥
विरुद्धरसयोर्व्यक्तिर्यदाऽमतपदार्थकम् ।
आरुह्योरुस्थलीं व्याघ्रीं चुम्बत्यस्य मुखाम्बुजम् ॥
पतत्प्रकर्षं बन्धस्य पादे पादे प्रहीणता ॥
विव(प)क्ष्यक्षितिभृत्पक्षच्छेदी विजयते नृपः ।

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१६८-१७२)

(अर्थदोषाः-)

अपुष्टकष्टव्याघातपुनरुक्ताधिकोपमाः ।
अपार्थदुष्क्रमग्राम्यसन्दिग्धनियमच्युताः ॥
साकाङ्क्षपुरुषाश्लीलव्यर्थभिन्नासमोपमाः ।
अनिरूप्यश्चातिमात्रो निर्हेतुरनवीकृतः ॥
अप्रसिद्धोपमो हीनोपमः सहचरच्युतः ।
विरुद्धश्चेति दुष्टार्थाश्चतुर्विंशतिरीरिताः ।
उत्कर्षं यो न पुष्णाति सोऽर्थोऽपुष्ट इतीष्यते ॥
उदयं भजते चन्द्रः पौर्णम्यां रजनीमुखे।
कृच्छ्रेण गम्यते योऽर्थः स कष्ट इति कथ्यते ।
तर्को यस्त्वाह मद्वश्यं तत्फलोक्तावववाक् स किम् ॥
व्याघातः पूर्वकथितविरुद्धार्थोपवर्णने ॥
त्वन्मुखेन्दुतुला कस्मादिन्दोरस्य कलङ्किनः ।
पुनरुक्तः प्रतीतार्थकथनं स्याद्विना फलम् ।
यथा स्कन्देन गिरिजा जयन्तेन यथा शची ॥
तथा सुतेन सा रेजे तत्समेनेह तत्समा ।
इदमेव बुधा एकार्थाभिधं दूषणं विदुः ॥
यत्रोपमानमधिकं कथितः सोऽधिकोपमः ।
बकः पर्वतशृङ्गाग्रे गरुत्मानिव राजते ॥
न यत्र समुदायार्थः सोऽपार्थ इति कीर्तितः ॥
रटन्ति करटाः क्रूरं सुन्दरी नृपकामिनी ।
दुष्क्रमस्तु यथायोग्यक्रमहीनार्थ इष्यते ।
समुद्धरेदसावद्रीन् पादपान् वा बलोद्धतः ॥
अविदग्धैरुच्यमानस्त्वर्थो ग्राम्य इतीरितः ॥
मयि सम्भोगसाकाङ्क्षेऽप्यबले किमुपेक्षसे ।

तात्पर्यग्राहकाभावात् सन्दिग्धोऽनवधारितः ।
अर्थः सेव्योऽथ वा कामो भवन्तः कथयन्तु मे ॥
अवश्यवाच्यनियमरहितो नियमच्युतः ॥
अद्य राजन्वती जाता त्वया नृप वसुन्धरा ।
पदार्थान्तरसापेक्षस्त्वर्थः साकाङ्क्ष उच्यते ।
भीमो नामृष्यत तदा क्लिश्यमानां परैः प्रियाम् ।
अत्यन्तकर्कशार्थस्तु परुषो नाम कीर्तितः ॥
दावानलेन्धनं सद्यः क्रियन्तामर्भका इमे ॥
अश्लीलः स्यात्स वाक्यार्थो व्रीडाकार्यर्थसूचकः ।
प्रविशत्युत्थितो धृष्टो रन्ध्रमिच्छन् पुनः पुनः ।
प्रयोजनेन रहितो योऽर्थः स व्यर्थ इष्यते ॥
घटी कुचतटी कान्ता विटं किमिति नेहते ॥
सम्बन्धवर्जितो योऽर्थः स भिन्न इति कथ्यते ।
श्लाघ्यो रत्नाकरो यस्मात्क्षराणां पयसां निधिः ।
यत्रासदृक्षोपमानं सोऽर्थः स्यादसमोपमः ॥
ललाटतटसंस्पृष्टमुक्ताजालकमण्डितः ॥
वाजी फालस्फुरन्नेत्रो महादेव इवाऽबभौ ।
अनिरूप्यो नामतः स्यादयुक्तस्यानुवादतः ।
हरते पथिक प्राणान् जगत्प्राणोऽतिपातकी ॥
यः सर्वलोकातीतार्थः सोऽतिमात्र इतीरितः ॥
सभाऽपि ब्रह्मणो मग्ना चकोरीनयनाम्बुषु ।
हेतुं विनोच्यते योऽर्थः स निर्हेतुरितीर्यते ।
वेश्येयं बहुदातारमपि तं न समीहते ॥
विशेषापर्यवसितः स्यादर्थस्त्वनवीकृतः ॥

किं विद्यया किं धनेन किमु स्त्रीभिः किमायुषा।
यत्राप्रसिद्धोपमानमप्रसिद्धोपमश्च सः ।।
वियुक्तकामिनीवक्त्रं दिवा नीलाब्जवद्बभौ ।।
हीनं यत्रोपमानं स्यात्सोऽर्थो हीनोपमो मतः ।
अलर्केणेव सारङ्गा भवता निहता द्विषः ।
अतुल्येन सहोक्तार्थो भवेत्सहचरच्युतः ।।
ज्योत्स्नेवेन्दुं मृषोद्येव धूर्तं सा न जहौ पतिम् ।।
विरुद्धो देशकालादिविरुद्धार्थः प्रकीर्तितः ।
मरुस्थलेऽपि गङ्गा नः पिपासां शमयिष्यति ।।

(म.म.चम्पूः-शेषबिन्दुः-११-पृ-१७३-१७४)

(रसदोषाः-)

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ।।
प्रतिकूलविभावस्य ग्रहो दीप्तिः पुनः पुनः ।
अकाण्डप्रथनं चैव रसच्छेदोऽङ्गविस्तृतिः ।।
तथाऽङ्ग्यननुसन्धानं प्रकृतीनां विपर्ययः ।
तथाऽनङ्गाभिधानं च रसदोषास्त्रयोदश ।।
दृष्टे प्रियेऽस्या लज्जाऽभूद्रसतां च ययौ रतिः ।
व्यभिचारी रसः स्थायी त्रयो वाच्याः क्रमादिह ।
लीलावनेऽस्य तन्वङ्गी याता नयनगोचरम् ।
इत्यादावनुभावस्य व्यक्तिः स्यात् कष्टकल्पिता ।
उत्कम्पतेतरामेषा मीलयत्यपि लोचने ।।
भयानकसमत्वात् स्याद्विभावस्येह कष्टता ।।
व्याघ्रो व्यात्तमुखो वर्त्मन्यास्ते मुग्धे क्व यास्यसि ।

इत्यादौ प्रतिकूलस्य विभावस्य भवेद्ग्रहः ।
ज्ञेयः पुनः पुनर्दीप्ती रतिप्रलपितादिषु ।।
शृङ्गारवर्णने भानुमत्या दुर्योधनस्य च ।।
अकाण्डप्रथनं ज्ञेयं वेणीसंहारनाटके ।
भार्गवेण समं काष्ठां परां वीररसे गते ।।
कङ्कणोन्मोचनायाहं गच्छामीत्युदिते गुरोः ।
रसच्छेदो महावीरचरितेऽकाण्ड इष्यते ।।
अप्रधानस्य बहुधा हयग्रीवस्य वर्णने ।
हयग्रीववधे काव्ये विज्ञेयाङ्गस्य विस्तृतिः ।।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ।
तत्राङ्ग्यननुसन्धानं विद्वद्भिः परिकीर्त्यते ।।
यथा जीमूतवाहस्य शान्तस्याद्भुतमन्तरे ।
निवेश्य शृङ्गाररसो नागानन्दे प्रकाशितः ।।
अदिव्यादिषु दिव्यादिगुणानां परिकीर्तने ।
विद्वद्भिस्तत्र विज्ञातः प्रकृतीनां विपर्ययः ।।
प्रशंसनं कृतं राज्ञा बन्दिना वर्णितस्य यत् ।
तदनङ्गाभिधानं स्यात्सट्टके प्रथमाङ्कके ।।

(म.म.चम्पूः-शेषबिन्दुः-११-१८३-१८४)

* * *

# आकरग्रन्थसूचिका



| ग्रन्थाः | ग्रन्थप्रणेतारः, प्रकाशकाः, वर्षम् |
|---|---|
| कारिकावली | विश्वनाथतर्कपञ्चाननः<br>बालमनोरममुद्रणालयः, १९२३ |
| काव्यकौतुकम् | भट्टतौतः |
| काव्यप्रकाशः | मम्मटः<br>प्राच्यविद्यासंशोधनालयःमैसूरु, १९७४ |
| काव्यप्रकाशसङ्केतव्याख्यानम् | माणिक्यचन्द्रः<br>प्राच्यविद्यासंशोधनालयः मैसूरु, १९७४ |
| काव्यमीमांसा | राजशेखरः<br>चौखम्बा विद्याभवनम् वाराणसी, १९७७ |
| काव्यादर्शः | दण्डी<br>शारदामन्दिरम् मैसूरु, १९७५ |
| काव्यालङ्कारः | भामहः<br>मोतीलाल् बनारसीदास् वाराणसी, १९७० |
| काव्यालङ्कारसूत्रवृत्तिः | वामनः<br>वाणीविलासमुद्रणालयः, १९०९ |
| चमत्कारचामीकरम् | कृष्णावधूतः<br>पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु, २००२ |
| दशरूपकम् | धनञ्जयः<br>चौखम्बा विद्याभवनम् बनारस, १९५५ |
| ध्वन्यालोकः | आनन्दवर्धनः<br>ज्ञानमण्डलप्रकाशनम् वाराणसी, १९६७ |

| ग्रन्थाः | ग्रन्थप्रणेतारः, प्रकाशकाः, वर्षम् |
|---|---|
| ध्वन्यालोकलोचनम् | अभिनवगुप्तः<br>चौखम्बा विद्याभवनम् वाराणसी, १९९२ |
| प्रतापरुद्रीयम् | विद्यानाथः<br>बालमनोरममुद्रणालयःचेन्नै, १९५० |
| भारतीयकाव्यमीमांसे (कन्नडभाषापुस्तकम्) | ती.नं. श्रीकण्ठय्यः<br>मैसूरुविश्वविद्यालयप्रसाराङ्गविभागः, १९७३ |
| महाभारतम् | श्री वेदव्यासः<br>टि.आर्. कृष्णाचार्यः मुम्बयी, १९०९ |
| मन्दारमरन्दचम्पूः | कृष्णावधूतपण्डितः<br>पाण्डुरङ्गजावजी मुम्बयी, १९२४ |
| मुक्तावली | विश्वनाथतर्कपञ्चाननः<br>बालमनोरममुद्रणालयः, १९२३ |
| रघुवंशम् | कालिदासः<br>मोतिलाल् बनारसीदास्, १९५७ |
| रसगङ्गाधरः | जगन्नाथः<br>चौखम्बाविद्याभवनम् वाराणसी, १९७८ |
| राघवेन्द्रतन्त्रम् | कृष्णावधूतः<br>कृष्णावधूतसेवासमितिः - बेङ्गळूरु, १९९४ |
| वक्रोक्तिजीवितम् | कुन्तकः<br>चौखम्बासंस्थानम् वाराणसी, १९७७ |
| साहित्यदर्पणः | विश्वनाथः<br>जयकृष्णदासहरिदासगुप्तः बनारस्, १९४७ |
| सुभाषितरत्नभाण्डागारम् | निर्णयसागरमुद्रणालयः - १९६३ |

7. **Srimad-Bhāgavatam** **Editor : P.S.Sheshagiri Acharya**
(Critically edited by renowned scholar Śri P.S. Sheshagiri Acharya with the help of three Palm-leaf manuscripts written in Tulu, Malayalam)
*Pages: 939 Rs. 150/-*

8. **Pancālakṣaṇī** **Editor : Prof. A. Haridasa Bhat**
(With Prof. A. Haridasa Bhat's original commentary on Gādādharī and Jāgadīśī commentaries) *Pages: 130 Rs. 75/-*

9. **Sarvamūla Śabda Nighaṅtuḥ** **Editors : Pt. Ranganatha Katti & Pt. Shankaranarayana Adiga**
(A rare collection of interpretations on words of Vedic and Purāṇic scriptures as given by Śri Madhva in his Sarvamūla) *Pages: 630 Rs. 250/-*

10. **Subhāṣitāni** **Editor : Dr. A.V. Nagasampige**
(Wise words soaked in honey from ancient times) *Pages: 90 Rs. 20/-*

11. **Śrutisiddhāntasaṅgrahaḥ** **Editor : Dr. A.V. Nagasampige**
(Interpretations of Śrutis by Vanamāli Miśra) *Pages: 350 Rs. 200/-*

12. **Laghurāmāyaṇam** **Editor : P.V. Upadhyaya**
(Rāmāyaṇam in brief by Śri Kṛṣṇāvadhūta) *Pages: 50 Rs. 15/-*

13. **Kāvyanavanīta and Kāvyalakṣaṇa Saṅgrahaḥ**
**Editor : Pt. Shankaranarayana Adiga**
(Poetics in brief by Śri Kṛṣṇāvadhūta) *Pages: 115 Rs. 20/-*

14. **Alaṅkārasūtrabhāṣyam - Camatkāra cāmīkaram**
**Editor : Pt. Ranganatha Katti**
(Commentary on rhetorics by Śri Kṛṣṇāvadhūta)
*Pages: 96 Rs. 20/-*

## WORKS READY FOR PUBLICATION :

**1. Bhedataraṅgiṇi** — **Editor : Prof. K. Hayavadana Puranik**
(Authored by Koneri Ranganātha)

**2. Advaita Sūtrārtha Paddhatiḥ** — **Editor : Prof. D. Prahlada Char**
(A commentary on Brahmasūtra according to Advaita system)

**3. Gītābhāṣyam (3-6 chapters)** — **Editor : Prof. P. Venkatesha Bayari**
of Śri Madhvācārya,
(With Prameyadīpikā of Śri Jayatīrtha, Bhāvadīpikā of Śri Śrinivāsatīrtha & Bhāvaratnakośa of Śri Sumatīndratīrtha)

**4. Pramāṇa Paddhatiḥ** — **Editor : Prof. A. Haridasa Bhat**
(Of Śri Jayatīrtha with Bhāvavivaraṇa of Śri Vedeśatīrtha & Bhāvadīpa of Śri Rāghavendratīrtha)

**5. Smṛti Maṇikya Saṅgrahaḥ** — **Editor : Dr. A. V. Nagasampige**
(Commenatry of Sadācārasmṛti in Sanskrit verses by Kāgalūru Vāsudevācārya)

**6. Bṛhadāraṇyakopaniṣad** — **Editors : Dr. A. V. Nagasampige, Dr. H. Satyanarayanacharya, Pt. Raghuttama V. Nagasampige**
(With Śri Madhva Bhāṣya, Khaṇḍārtha of Śri Vyāsatīrtha, Śri Bhāvabodha's gloss & Śri Rāghavendratīrtha's Khaṇḍārtha)

**7. Chāndogyopaniṣad** — **Editors : Pt. Ranganatha Katti, Pt. Shankaranarayana Adiga**
(With Śri Madhva Bhāṣya, glosses of Śri Vedeśatīrtha & Śri Rāghavendra tīrtha)

**8. Itareyopaniṣad** — **Editor : P.V. Upadhyaya**
(With Śri Madhva Bhāṣya, glosses of Tāmraparṇīya & Bhagavantarāya)